

# अथ ग्रहयज्ञप्रयोगारम्भः ।

॥ श्रीगणेशाय नमः ॥ हेरम्बं च गुरुं समस्तसुखदं नत्वातथाकालिकां वेदाभ्यासवता
सुशम्भुनगरेख्यातेसताशम्भुना । राधाकृष्णसुतेनमन्त्रसहितोदिव्यग्रहाणां मयाबालानां
क्रियतेसुखायसततं यज्ञप्रयोगः शुभः ॥ १ ॥ अथानुक्रमः ॥ सुस्नातः प्राङ्मुखोभूत्वा
यजमानः कृताह्निकः । आहूयब्राह्मणान्कुर्यात्प्रतिज्ञां विधिवत्तदा ॥ १ ॥ गणेशपूजनं कृत्वा
वरुणं च ततोयजेत् । पुण्याहवाचनं कृत्वाऽभिषेकंकारयेत्ततः ॥ २ ॥ गौर्यादिपूजनं चैव
घृतमातृकपूजनम् ॥ आयुष्यमन्त्रपाठन्तु नान्दिश्राद्धमतः परम् ॥ ३ ॥ सर्वेषां वरणं
कृत्वासर्वतोभद्रपूजनम् । ततः प्रधानदेवस्य पूजनं च समारभेत् ॥ ४ ॥ स्थाप्याग्निंसुग्र
हाणां च स्थापनंकुशकण्डिकाम् । कृत्वाततोयजेदाज्याहुतिंभाक्तिपुरस्सरः ॥ ५ ॥ सूर्यादीनां
ग्रहाणांचहोमः कार्यस्तिलादिभिः । ततः प्रधानदेवस्यहोमः कार्योयथाविधि ॥ ६ ॥ सर्व
तोभद्रदेवानां हवनं वैसमाचरेत् । पूजनं स्विष्टकृच्चैवघृतेनैवनवाहुतिः ॥ ७ ॥ दिक्पाले

भ्योबलिंदीपंसूर्यादीनामतः परम् । अम्बिकायैबलिंदद्याद्द्यात्क्षेत्राधिपायच ॥ ८ ॥ पूर्णाहुतिमथोहुत्वावसोर्द्धारां समाचरेत् । भस्मनात्र्यायुषं कृत्वासंस्रवप्राशनादिकम् ॥ ९ ॥ श्रेयादानंब्राह्मणेभ्योदद्यात्स्वर्णसुदक्षिणाम् । कारयेदभिषेकादीन् विसर्जनस्ततः परम् ॥ १० ॥ भोजनं ब्राह्मणैः सार्द्धंसतांचायमनुक्रमः । ग्रन्थेभ्यःसारमुद्धृत्यविचार्यसदसच्चयत् ॥ ११ ॥ अनुक्रमोयंग्रन्थस्यशम्भुनाथेनभाषितः । अथकर्तव्यता । चन्द्रादिशुभग्रहानुकूलसमये शुभेदिने शुभेलग्नेच कृतनित्यक्रियो यजमानः शुभासने प्राङ्मुखउपविश्य स्वदक्षिणतः पत्नीं चोपवेश्य । ॐ केशवाय नमः १ ॐ नारायणाय नमः २ ॐ माधवाय नमः ३ ॥ इति त्रिराचम्य । ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वःप्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ १ ॥ इति मन्त्रेण





टि०१ पवित्रलक्षणङ्कात्यायनेनोक्तम्॥अनन्तरगर्भिणीसाग्रङ्कौशेयद्विदलमेवच॥प्रादेशमात्रविज्ञेया पवित्रायत्रकुत्रचित् ॥

पवित्रधारणं कृत्वा ततः प्राणायामकुम्भकपूरकरेचकात्मकत्रयं कुर्यात् । ॐ अपवित्रः पवित्रो वा सर्वावस्थांगतोपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः इत्यात्मानं पूजासामग्रीं च संप्रोक्ष्य तण्डुलपूरितताम्रपात्रे मृन्मये वा कुंकुमेनाष्टदलं पद्मं कृत्वा तदुपरि गोमयमयीं गौरीं फलमयं गणेशं च संस्थाप्यहस्ते अक्षतपुष्पाणि गृहीत्वा आनोभद्रादीन् मंगलमन्त्रान् पठेत् ॥ ॐ आनोभद्राः क्रतवोयन्तु विश्वतोदब्धासो अपरीतासऽउद्भिदः । देवानोयथासदमिद्वृधेऽअसन्नप्रायुवो रक्षितारोदिवे दिवे ॥ १ ॥ देवानां भद्रासुमतिर्ऋजूयतां देवानां ᳲ रातिरभिनोनिवर्त्तताम् । देवानां सख्यमुपसेदिमाव्वयन्देवानऽआयुः प्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्वयानिविदाहूमहेवयं भगंम्मित्रमदितिन्दक्षंमास्रिधंम् । अर्य्यमणंवरुण ᳲ सोमम्मश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोम

योभुव्वातुभेषजं तन्मातापृथिवीतत्पिताद्यौः। तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानं जगतस्तस्थुषस्पतिंधियं जिन्वमवसेहूमहेवयम्। पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः। स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः, शुभंयावानो विदथेषुजग्मयः। अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽ अवसागमन्निह॥ ७ ॥ भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवा२ꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम्। पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः।

॥ ९ ॥ अदि॑तिर्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः । विश्वे॑ दे॒वाऽअदि॑तिः॒ पञ्च॒ज
नाऽअदि॑तिर्जा॒तमदि॑तिर्जनि॑त्वम् ॥ १० ॥ द्यौः शान्ति॑र॒न्तरि॑क्ष॒ꣳ शान्तिः॑ पृथि॒वी शान्ति॒रापः॒
शान्ति॒रोष॑धयः॒ शान्तिः॑ । वन॒स्पत॑यः॒ शान्ति॒र्विश्वे॑ दे॒वाः शान्ति॒र्ब्रह्म॒ शान्तिः॒ सर्व॒ꣳ शान्तिः॒
शान्ति॑रे॒व शान्तिः॒ सा मा॒ शान्ति॑रेधि ॥ ११ ॥ यतो॑ यतः॒ स॒मीह॑से॒ ततो॑ नो॒ अभ॑यं कुरु ॥ शन्नः॑ कु॒
प्र॒जाभ्यो॒ऽभ॑यन्नः प॒शुभ्यः॑ ॥ १२ ॥ सुशान्तिर्भवतु॥ श्रीमन्महागणाधिपतयेनमः ॥ लक्ष्मी
नारायणाभ्यांनमः ॥ उमामहेश्वराभ्यांनमः ॥ वाणीहिरण्यगर्भाभ्यांनमः ॥ शचीपुरन्दरा
भ्यांनमः ॥ मातापितृभ्योनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्योनमः ॥ ग्रामदेवता
भ्योनमः ॥ वास्तुदेवताभ्योनमः ॥ स्थानदेवताभ्योनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्रा-
ह्मणेभ्योनमः ॥ विश्वेशमाधवंधुण्ढिंदण्डपाणिंचभैरवम् । वन्देकाशींगुहांगंगांभवानींमणिकर्णि

काम् ॥ १ ॥ वक्रतुण्डमहाकायकोटिसूर्यसमप्रभ । निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ १२ ॥ सुमुखश्चैकदन्तश्चकपिलोगजकर्णकः । लम्बोदरश्चविकटोविघ्ननाशोविनायकः ॥ ३ ॥ धूम्रकेतुर्गणाध्यक्षोभालचन्द्रोगजाननः । द्वादशैतानिनामानियः पठेच्छृणुयादपि ॥ ४ ॥ विद्यारम्भेविवाहेचप्रवेशेनिर्गमेतथा । संग्रामेसङ्कटेचैवविघ्नस्तस्यनजायते ॥ ५ ॥ शुक्लाम्बरधरंदेवंशशिवर्णंचतुर्भुजम् । प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशान्तये ॥ ६ ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः । सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ ७ ॥ सर्वमङ्गलमाङ्गल्येशिवेसर्वार्थसाधिके । शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ ८ ॥ सर्वदासर्वकार्येषुनास्तितेषाममङ्गलम् । येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ ९ ॥ तदेवलग्नंसुदिनंतदेवताराबलंचन्द्रबलंतदेव । विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ १० ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः॥येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ ११ ॥ यत्रयोगेश्वरः कृष्णोयत्र

पार्थोधनुर्धरः । तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ १२ ॥ अनन्याश्चिंतयंतोमांये जनाः पर्युपासते । तेषांनित्याभियुक्तानांयोगक्षेमंवहाम्यहम् ॥ १३ ॥ स्मृते सकलकल्याणंभाजनं यत्रजायते । पुरुषंतमजंनित्यंव्रजामि शरणंहरिम् ॥ १४ ॥ सर्वेष्वारम्भकार्येषुत्रयस्त्रिभुवनेश्वराः । देवादिशंतुनः सिद्धिंब्रह्मेशानजनार्दनाः ॥ १५ ॥ यजमानः कुशपुष्पयवाक्षतजलद्रव्यंचादायसङ्कल्पङ्कुर्यात् । ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतोमहापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोद्वितीयेपरार्द्धेविष्णुपदे श्रीश्वेतवाराहकल्पेवैवस्वतमन्वन्तरे अष्टाविंशतितमेयुगेकलिप्रथमचरणे जम्बूद्वीपेभूर्लोके भारतवर्षेभरतखण्डेआर्यावर्तैकदेशे अविमुक्तवाराणसीक्षेत्रे । आनन्दवनेमहास्मशानेगौरीमुखेत्रिकण्टकाविराजिते । भागीरथ्याः पश्चिमेभागेविक्रमशकेबौद्धावतारेअमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमु

कऋतौ महामाङ्गल्यप्रदमासोत्तमेमासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे रौद्राद्यमुककाले अमुकराशिस्थितेचन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थितेदेवगुरौ शेषेषुग्रहेषुयथायथाराशिस्थानास्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्माहं मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं कायिकवाचिकमानासिकसांसर्गिक चतुर्विधपातकदुरितक्षयद्वारा धर्मार्थकाममोक्षचतुर्विधलक्ष्मीप्राप्त्यर्थं सर्वग्रहस्वरूपी श्रीपरमेश्वरप्रीत्यर्थंग्रहशान्तिमहंकरिष्ये ॥ तदंगत्वेन स्वस्तिपुण्याहवाचनं ( अविघ्नपूजनं मण्डपदेवतापूजनं ) मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमन्त्रजपं नान्दीश्राद्धं आचार्यादिवरणानि [ ग्रहानुकूल्यतासिद्ध्यर्थं ग्रहयज्ञं ] च करिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थं गणेशाम्बिकयोः पूजनमहंकरिष्ये इति

सङ्कल्पङ्कृत्वाषोडशोपचारैः गणपतिंपूजयेत् ॥ हस्तेअक्षतान्गृहीत्वा गणपतिमावाहयेत् ॥ तत्रमन्त्रः एकदन्तंशूर्पकर्णंगजवक्त्रंचतुर्भुजम् ॥ पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकम् ॥ १ ॥ ध्यायेद्गजाननंदेवंतप्तकांचनसन्निभम् ॥ चतुर्भुजंमहाकायंसर्वाभरणभूषितम् ॥ २ ॥ दंताक्ष मालापरशुंपूर्णमोदकधारिणम् ॥ मोदकासक्तशुंडाग्रमेकदन्तंविनायकम् ॥३॥ आवाहयामिपूजार्थं रक्षार्थं च ममक्रतोः ॥ इहागत्यगृहाणत्वं पूजायामं च रक्षमे ॥ ४ ॥ ॐ गुणानांत्वागुणपं ति ँ हवामहेप्रियाणांन्त्वाप्रियपंति ँ हवामहेनिधीनां त्वांनिधिपाति ँ हवामहेवसोमम ॥ आहमंजानिगर्भंधमात्वमंजासिगर्भंधम् ॥ १ ॥ ॐ भूर्भुवःस्वःसिद्धिबुद्धिसहितायगणपतये

टि० १ षोडशोपचारास्तु कर्मप्रदीपे ॥ आवाहनासनंपाद्यमर्घमाचमनीयकम् ॥ स्नानंवस्त्रोपवीतश्चगंधमाल्यान्यनु- क्रमात् ॥ १ ॥ धूपंदीपश्चनैवेद्यंताम्बूलं च प्रदक्षिणा ॥ पुष्पाञ्जलिरितिप्रोक्ताउपचारास्तुषोडश ॥ २ ॥ फलेनसफला- वाप्तिसाङ्गतादक्षिणार्पणमिति ।

नमः गणपतिमावाहयामि स्थापयामि ॥ हेमाद्रितनयां देवीं वरदां भैरवप्रियाम् ॥ लम्बोदर स्य जननीं गौरीमावाहयाम्यहम् ॥ १ ॥ अम्बेऽअम्बिकेऽम्बालिकेनमानयतिकश्चन ॥ ससं स्त्यश्वकः सुभद्रिकांकांपीलवासिनीम् १ ॐ भूर्भुवः स्वः गौर्यैनमः गौरीमावाहयामिस्थाप यामि ॥ ओं मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञ ७ समिमन्दधातु॥ विश्वेदेवासऽइहमादयन्तामोँ प्रतिष्ठ १ अस्यैप्राणाः प्रतिष्ठन्तु अस्यैप्राणाक्षरन्तु च ॥ अ स्यैदेवत्वमर्चायैमामहेतिकश्चन ॥ १ ॥ गणेशाम्बिकेसुप्रतिष्ठितेवरदेभवतम् ॥ विचित्ररत्न खचितंदिव्यास्तरणसंयुतम् ॥ स्वर्णसिंहासनंचारुगृहाणसुरपूजित ॥ १ ॥ पुरुषएवेदम् ॥ ओं गणेशाम्बिकाभ्यांनमः आसनं स० ॥ ओं सर्वतीर्थसमुद्भूतंपाद्यंगन्धादिभिर्युतम् । विघ्नरा जगृहाणेदंभगवन्भक्तवत्सल ॥ २ ॥ ओं एतावानस्य ॥ ग० पाद्यम्० ॥ ओं गणाध्यक्षन

मस्तेस्तुगृहाणकरुणाकर । अर्घ्यंचफलसंयुक्तंगंधमाल्याक्षतैर्युतम् ॥ ३ ॥ ओं त्रिपादूर्ध्वः । ग० अर्घ्यम् ॥ विनायकनमस्तुभ्यंत्रिदशैरभिवंदित । गंगोदकेनदेवेशकुरुष्वाचमनंप्रभो । ४ । ततोविराट् ॥ ग० आचमनम् ॥ मन्दाकिन्यास्तुयद्वारिसर्वपापहरंशुभम् । तदिदंकल्पितंदेव स्नानार्थंप्रतिगृह्यताम् ॥ ४ ॥ ओं तस्माद्यज्ञात् ग० स्नानम् ०॥ अथवा । ओं गणेशाम्बि० एतानिपाद्यार्घ्याचमनीयस्नानीय पुनराचमनीयानिसमर्पयामि ॥ ओं पञ्चनद्यः सरस्वतीम पियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासो देशेभवत्सरित् ॥ १ ॥ पञ्चामृतं मयानीतं पयो दधिघृतं मधु ॥ शर्कराचसमायुक्तं स्नानार्थं प्रतिगृह्यताम् ॥ ओं ग० पञ्चामृतस्नानं स० । अ थवा ॥ ओं पयः पृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशःसंतुम ह्यम् ॥ ओं ग० पयः स्नानं स० ॥ ओं दधिक्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ ओं ग० दधिस्नानं स० ओं घृतम्मिमिक्षेघृत

मस्यं योनिर्घृतेश्रितो घृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतं वृषभवक्षिहव्यम् ओं ग० घृतस्नानं स० ॥ ओं मधुवाताऋतायतेमधुंक्षरंतिसिंधव ः ॥ माध्वीर्न्नः संत्वोषधी ः १ मधुनक्तमुतोषसोमधुमत्पार्थिवं २ रजः ॥ मधुद्यौरस्तुन २ पिता २ मधुमान्नोव्वनस्पतिर्मधुमाँ २ऽ अस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥ ३ ॥ओं ग० मधुस्नानं स० ओं अपा २ रसमुद्वयस २ सूर्य्येसंतं २ समाहितम् ॥ अपा २ रंसस्ययोरसस्तंव्वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टतमम् ॥ ओं ग० शर्करास्नानं स० ओं आपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ ३ ॥ गंगाचयमुनाचैवगोदाव

टि० १ अथवा शुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाऽअवलिद्रानभोरूपाः पार्ज्जन्याः ॥

रिसरस्वती ॥ नर्मदासिंधुकावेरीस्नानार्थं प्रतिगृह्यताम् ॥ ओं ग० शुद्धोदकस्नानं स० ओं ग० स्नानांते आचमनं स० । ओं युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवतिजायमानः ॥ तंधीरासः कवयऽउन्नयन्तिस्वाध्योमनसादेवयंतः ॥ शीतवातोष्णसंत्राणलज्जायारक्षणंपरम् ॥ देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छमे । ओं ग० वस्त्रं स० सुजातो० उपवस्त्रं वा ॥ ओं ग० वस्त्रोपवस्त्रार्थेरक्तसूत्रंसमर्पयामि अलंकरणार्थं अक्षतान् स० ॥ ओं यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुंचशुभ्रं यज्ञोपवीतं बलमस्तुतेजः ॥ नवभिस्तंतुभिर्युक्तं त्रिगुणं देवतामयम् ॥ उपवीतं मयादत्तं गृहाणपरमेश्वर ॥ ओं ग० यज्ञोपवीतं स० ओं ग० आचमनं स० ॥ श्रीखण्डंचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥ ओं त्वांगन्धर्वाऽअंखनँस्त्वामिन्द्रस्त्वांबृहस्पतिं ÷ ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ओं ग० गन्धं स० ॥ अक्षताश्चसुरश्रेष्ठाः कुङ्कु

माक्ताः सुशोभिताः । मया निवेदिताभक्त्याग्रहाणपरमेश्वर ॥ ओं अक्षन्नमीमदन्तह्यव प्रियाऽअंधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विद्रतेहरी ॥ ओं ग० अक्षतान्स० ॥ माल्यादीनिसुगन्धीनिमालत्यादीनिवैप्रभो । ४ । मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् ॥ १ ॥ ओषधी: प्रतिमोदध्वंपुष्पवती: प्रसूवरी: अश्वा ऽइवसजित्वरीर्वीरुधः पारयिष्णवः ॥ ओं ग० पुष्पमालां स० ॥ दूर्वाङ्कुरान्सुहरितानमृतान्मङ्गलप्रदान् ॥ आनीतांस्तवपूजार्थंगृहाणगणनायक ॥ ओं काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेन च ॥ ओं ग० दूर्वाङ्कुरान्स० ॥ सिन्दूरंशोभनंरक्तं सौभाग्यंसुखवर्द्धनम् ॥ शुभदंकामदंचैव सिन्दूरंप्रतिगृह्यताम् ॥ ग० सिन्दूरंस० । नानापरिमलैर्द्रव्यैर्निर्मितंचूर्णमुत्तमम् । अबीरनामकंचूर्णंगन्धंचारुप्रगृह्यताम् ॥ ओं अहिरिवभोगैः पर्येतिबाहुंज्यायाहेतिंपरिबाधमानः

हस्तप्रक्षालनम् ॥ ओं गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ओं ग० नानापरिमलद्रव्याणि

स० ॥ वनस्पतिरसोद्भूतो गंधाढ्यो गंध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ओं

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः ॥ देवानामसि वह्नितमं

सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ओं ग० धूपं स० ॥ साज्यं च वर्तिसंयुक्तं वह्निना यो

जितं मया ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ॥

त्राहि मां निरयाद्घोराद्दीपज्योतिर्नमोऽस्तु ते ॥ ओं अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योति

ज्योतिः सूर्यः स्वाहा ॥ अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥

ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ १ ॥ ओं ग० दीपं स० ॥ हस्तप्रक्षालनम् ॥ नैवेद्यं

१टि ० अथवा वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ॥ गोभिः सन्नद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि ॥

गृह्यतांदेवभाक्तिंमेह्यचलांकुरु ॥ ईप्सितंमेवरंदेहि परत्रचपरांगतिम् ॥ शर्कराखंडखाद्यानिदधिक्षीरघृतानि च ॥ आहारंभक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ ओं नाभ्यांऽआसीदंतरिक्ष १ शीर्ष्णोंद्यौ ः समवर्तत ॥ पद्भ्यांभूमिर्दिश ः श्रोत्रात्तथालोकाँ२अंकल्पयन् ॥ ओं प्राणायस्वाहा॥ओं अपानायस्वा०॥ओं समानायस्वा०॥ओं उदानायस्वा०॥ओं व्यानायस्वा० ॥ ओं ग० नैवेद्यं स०॥ओं ग० उत्तरापोशनं स० ॥ हस्तप्रक्षालनार्थोंजलं स० ॥ मुखप्रक्षालनार्थंजालं स० ॥ वा आचमनीयंमध्येपानीयंउत्तरापोशनंस० ॥ ओंचन्दनंमलयोद्भूतंकस्तूर्यादिसमन्वितम् ॥ करोद्वर्तनकंदेवगृहाणपरमेश्वर ॥ ओंअ १ शुनांतेअ १ शु ः पृच्यतांपरुषापरुः ॥ गन्धस्तेसोममवतुमदायरसोअच्युत ः ॥ ओं ग० चन्दनेनकरोद्वर्तनंस० ॥ ओं पूगीफलंमहद्दिव्यं ना

२ टी० अथवा अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेचतुष्पदे ॥ ०॥

गवल्लीदलैर्युतम् ॥ एलादिचूर्णसंयुक्तंतांबूलंप्रतिगृह्यताम् ॥ ओंयत्पुरुषेणहविषादेवायज्ञमतन्व
त ॥ व्वसन्तोऽस्यासीदाज्यंग्रीष्मऽइध्म ऽ शरद्धवि ऽ ॥ ओं ग० मुखवासार्थेपूगीफलतांबूलं स० ॥
इदंफलंमयादेवस्थापितं पुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ या ऽ फलिनी ऽ
इत्य० गण० फलं स० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनन्तपुण्यफलदमतः
शान्तिंप्रयच्छमे ॥ ओं हिरण्यगर्भ ऽ समवर्त्तताग्रेभूतस्यजात ऽ पतिरेकऽआसीत् ॥ सदा
धारपृथिवीन्द्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ओं ग० कृतायाःपूजायाः साद्गुण्यार्थंदक्षि
णां स० ॥ कदलीगर्भसंभूतंकर्पूरंतुप्रदीपितम् ॥ आरार्तिक्यमहंकुर्वेपश्यमेवरदोभव ॥ ओं इद
ऽ हवि ऽ ॥ आरात्रिपार्थिवं ऽ रजः पितुरप्रायिधामभि ऽ ॥ दिव ऽ सदांसिबृहतीवितिष्ठसऽआत्वेषं
वर्ततेतमः ओं ग० कर्पूरनीराजनं स० ॥ नानासुगन्धिपुष्पाणियथाकालोद्भवानिच ॥

पुष्पाञ्जलिर्मयादत्तोगृहाणपरमेश्वर ॥ ओं यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यांसन् ॥ तेहनाकंमहिमानंः सचन्तयत्रपूर्वेसाध्याः संतिदेवाः ॥ ओं गणानांत्वा० म् १ ओं अम्बेअम्बि० म् ॥ ओं राजाधिराजायप्रसह्यसाहिने ३ नमोवयंवैश्रवणायकुर्महे ॥ समेकामान्कामकामायमह्यं कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणायमहाराजायनमः । ओं स्वस्तिसाम्राज्यंभोज्यंस्वाराज्यं वैराज्यं पारमेष्ठ्यंराज्यंमहाराज्यमाधिपत्यमयंसमंतपर्यायेस्यात् सार्वभौमस्सार्वायुषांतादापराधात् पृथिव्यैसमुद्रपर्यंताया ऽएकराडितितदप्येषश्लोकोभिगीतोमरुतः परिवेष्टारोमरुतस्यावसन्गृहे ॥ आवीक्षितस्यकामप्रेविश्वेदेवाः सभा सद इति ॥ ओं विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यांधमंति संपतत्रैर्द्यावाभूमीजनयन्देव ऽएकः ॥ ओं ग० मन्त्रपुष्पाञ्जलिं स० ॥ यानिकानिचपापानि

---

१ टी० पदेपदभ्यः परिपूजकेभ्यः सद्योऽश्वमधादफलंददाति ॥ तांसर्वपापक्षयहेतुभूत।प्रदक्षिणान्तेपरितः करोमि ॥

ज्ञाताज्ञातकृतानिच ॥ तानिसर्वाणिनश्यंतिप्रदक्षिणपदेपदे ॥ ओं येतीर्थानिंप्रचरंतिसृकाहं
स्तानिषंगिणः । तेषां ऽसहस्रयोजनेवधन्वानितन्मसि ॥ ओं ग० प्रदक्षिणां ०स० ॥ अथविशेषार्घः
जलगंधाक्षतफलपुष्पदूर्वादक्षिणाः ताम्रपात्रेप्रक्षिप्य अवनिकृतजानुमंडलं कृत्वाञ्जलिना
गृहीत्वाश्लोकान्पठेत् ॥ ओं रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक ॥ भक्तानामभयंकर्तात्राताभव
भवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिन्धोषाण्मातुराग्रजप्रभो ॥ वरदस्त्वंवरंदेहिवांछितंवां
छितार्थद ॥ २ ॥ अनेनसफलार्घ्येणसफलोऽस्तुसदामम ॥ ओं ग० विशेषार्घ्यंसम० ॥ अथप्रार्थ
ना ॥ विघ्नेश्वरायवरदायसुरप्रियायलम्बोदरायसकलायजगद्धिताय ॥ नागाननायश्रुतियज्ञ
विभूषितायगौरीसुतायगणनाथनमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशु
भदायसुरेश्वराय ॥ विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते ॥ २ ॥ नमस्ते

ब्रह्मरूपायविष्णुरूपायतेनमः ॥ नमस्तेरुद्ररूपायकरिरूपायतेनमः ॥ ३ ॥ विश्वरूपस्वरूपायनमस्तेब्रह्मचारिणे ॥ भक्तप्रियायदेवायनमस्तुभ्यंविनायक ॥ ४ ॥ लम्बोदरनमस्तुभ्यंसततंमोदकप्रिय ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ ५ ॥ त्वांविघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेतिसुखदेतिफलप्रदेति । विद्याप्रदेत्यघहरेतिचयेस्तुवंतितेभ्योगणेशवरदोभवनित्यमेव ॥ ६ ॥ गणेशपूजनेकर्मयन्न्यूनमधिकंकृतम् । तेनसर्वेणसर्वात्माप्रसन्नोस्तुसदामम ॥ ७ ॥ अनयापूजयागणेशांबिकेप्रीयेताम् ॥ नमम ॥ इतिगणेशपूजनंसमाप्तम् ॥ अथकलशस्थापनम् ॥ कलशलक्षणं च ॥ स्वर्णं वा राजतं वापिताम्रंमृन्मयजंतुवा ॥ अकालमव्रणं चैवसर्वलक्षणसंयुतम् ॥ पंचाशांगुलवैपुल्यमुत्सेधे षोडशांगुलम् ॥ द्वादशांगुलकंमूलं मुखमष्टांगुलं तथा ॥ अथ सप्तमृदः ॥ अश्व स्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥ राजद्वाराच्चगोष्ठाच्चमृदमानीयानिक्षिपेत् ॥ अथसर्वौषधयः ॥ मुरामांसीवचाकुष्टं शैलेयं रज

नीद्वयम् ॥ सटीचंपकमुस्ताच सर्वौषधिगणः स्मृतः ॥ अथपंचपल्लवान् ॥ न्यग्रोधोदुंबरोऽश्वत्थ चूतजंबूतथैवचेति ॥ अथपंचरत्नानि ॥ कनकं कुलिशं मुक्तापद्मरागंच नीलकम् ॥ एतानि पञ्चरत्नानिसर्वकार्येषुयोजयेत् ॥ प्रकारान्तरम् ॥ वज्रमौक्तिकवैदूर्यप्रवालं चेन्द्रनीलकम् ॥ अलाभेसर्वरत्नानांहेमंसर्वत्रयोजयेदिति ॥ ततः कुंकुमादिनाभूमौअष्टदलंपद्मंकृत्वा ॥ ओं मुहीद्यौः पृथिवीचं नऽइमं युज्ञंमिमिक्षताम् ॥ पिपृतान्नोभरीमभिः । इति भूमिंस्पृष्ट्वा ॥ १ ॥ ओं ओषधयुः समंवदंतुसोमेनसुहराज्ञां ॥ यस्मैंकृणोतिंब्राह्मणस्त ऽ राज न्पारयामसि ॥ इति धान्यंविकिरेत् ॥ ओं आजिंघ्रकुलशं मुह्यात्वांविशुंत्विंदंवः ॥ पुनंरूर्ज्जानिंव र्तस्वसांनः सुहस्रंधुक्ष्वोरुधारांपयंस्वतीपुनम्माविंशतादुयिः ॥ इति धान्योपरिकलशंस्था पयेत् ॥ २ ॥ ओं वरुणस्योत्तम्भंनमसिवरुंणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऽ ऋतुसदंन्यासिवरुंण

स्यऽऋतुसदनमासिवरुणस्य ऋतुसदनमासीद ॥ इतिकलशेजलंपूरयेत् ।। ३ ।। ओंत्वांगन्धर्वा० त० इति गंधंक्षिपेत् ।। ४ ।। ओं याओषधीः पूर्वाजाताद्देवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामह ऽ शतंधामानिसप्तच । इति सर्वौषधयः ॥ ५ ॥ ओं कांडात्कांडात्प्र० च ॥ इति दूर्वाङ्कुरान् ॥ ६ ॥ ओं अश्वत्थे वोनिषदनं पर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ इति पञ्चपल्लवान् ॥ पूर्वोक्तलक्षणयुतंपवित्रेस्थऽइति मंत्रेणकलशेक्षिपेत् ॥ ७ ॥ ओं स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः ॥ ९ ॥ इतिसप्तमृदः ओं याः फलिनीर्याऽअफलाअपुष्पाऽयाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुंचंत्व ऽ हंसः ॥ इतिपूगीफलम् ॥ १० ॥ ओं परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ इतिपंचरत्नानि । ११ । हिरण्यगर्भः स० इति हिरण्यम् । १२ । सुजातोज्योतिषासु

हशर्म्मवरूंथमासंदत्स्वः ॥ वासो ऽअग्नेविश्वरूपं ᳚ संव्ययस्वविभावसो ॥ इतियुग्मवस्त्रे णकलशंवेष्टयेत् ॥ १० ॥ ओं पुर्णादर्विपरांपतसुपूर्णापुनरापंत ॥ वस्नेवविक्रीणावहा ऽइषमूर्ज᳚ शतक्रतो ॥ इति पूर्णपात्रमुपरिन्यसेत् । १४ । याः फलिनीतिकलशोपरिनारिकेलफलम् संस्थाप्य ॥ ओं तत्वांयामि ब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानो वरुणेहबोध्युरुशं ᳚ समानऽआयुः प्रमोषीः ॥ इति अस्मिन् कलशेवरुणंसाङ्गं सपरिवारं सायुधंसशक्तिकं आवाहयामि ॥ ओं अपांपतयेवरुणायनमः ॥ इति पंचोपचारैर्वरुणं संपूज्य ॥ ततोगङ्गाद्यावाहनम् ॥ कलाकलाहिदेवानां दानवानां कलाकलाः ॥ संगृह्यनिर्मितो यस्मात्कलशस्तेनकथ्यते । १ । कलशस्यमुखेविष्णुः कंठेरुद्रः समाश्रितः ॥ मुलेत्वस्यास्थितो ब्रह्मामध्येमातृगणाः स्मृताः ॥ २ ॥ कुक्षौतुसागराः सप्तसप्तद्वीपाचमेदिनी ॥ अर्जुनीगो

मतीचैवचंद्रभागासरस्वती ॥ ३ ॥ कावेरिकृष्णवेणाच गङ्गाचैवमहानदी ॥ तापीगोदावरी चैवमाहेंद्रीनर्मदा तथा ॥ ४ ॥ नदाश्चविविधाजातानद्यः सर्वास्तथापराः ॥ पृथिव्यांयानि तीर्थानिकलशस्थानितानिवै ॥ ५ ॥ सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः ॥ आयांतुम मशांत्यर्थं दुरितक्षयकारकाः ॥ ६ ॥ ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः ॥ अङ्गैश्चसहिताः सर्वेकलशं तुसमाश्रिताः ॥ ६ ॥ अत्रगायत्रीसावित्रीशान्तिः पुष्टिकरीतथा ॥ आयान्तु ममशांत्यर्थंदुरितक्षयकारकाः ॥ ८ ॥ यजमानः स्वहस्तेअक्षतान्गृहीत्वा ॥ ओं मनोजूति र्जु० ॥ तिष्ठ ॥ कलशेवरुणाद्यावाहितदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥ ओंवरुणाद्यावा हितदेवताभ्योनमः विष्ण्वाद्यावाहितदेवताभ्योनमइतिवा ॥ आसनार्थेअक्षतान्समर्पयामि ॥ पादयोः पाद्यंस० ॥ हस्तयोः अर्घ्यंस० ॥ आचमनंस० । पंचामृतस्नानंस० । शुद्धोदकस्ना नंस० ॥ स्नानांगाचमनंस० ॥ वस्त्रंस० ॥ यज्ञोपवीतंस० आचमनंस० ॥ उपवस्त्रं०स ॥

आचमनं० गंधंस० ॥ अक्षतान्स० ॥ पुष्पमालांस० ॥ नानापरिमलद्रव्याणिस० ॥ धूपंआ० ॥ दीपंद० हस्तप्रक्षालनम् ॥ नैवेद्यंस० ॥ तांबूलंस० ॥ पूगीफलंस० ॥ कृतायाः पूजायाः साद्गुण्यार्थंदक्षिणांस० ॥ आर्तिक्यंसम० ॥ मंत्रपुष्पांजलिंस० ॥ प्रदक्षिणांस० ॥ नमस्कारं स० ॥ अनयापूजयावरुणाद्यावाहितदेवताः प्रीयंतांनमम ॥ अथ प्रार्थना ॥ देवदानवसंवादे मथ्यमानेमहोदधौ । उत्पन्नोसितदाकुम्भविधृतोविष्णुनास्वयम् ॥ १ ॥ त्वत्तोयेसर्वतीर्थानिदेवाः सर्वेत्वयिस्थिताः । त्वयितिष्ठंतिभूतानित्वयिप्राणाः प्रतिष्ठिताः ॥ २ ॥ शिवः स्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः । आदित्यावसवोरुद्राविश्वेदेवाः सपैतृकाः ॥ ३ ॥ त्वयितिष्ठंतिसर्वेपियतः कामफलप्रदः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ ४ ॥ सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥ ५ ॥ नमोनमस्तेस्फटिकप्रभायसुश्वेतहारायसुमङ्गलाय ॥ सुपाशहस्तायझषासनायजलाधिनाथायनमोनमस्ते ॥ १ ॥ पाशपाणेनमस्तुभ्यंपाद्मिनिजीवनायक । पुण्याहवा

वनंयावत्तावत्त्वंसान्निधोभव ॥ इतिकलशप्रार्थना ॥ अथपुण्याहवाचनम् ॥ अवनीकृतजानुमंडलः कमलमुकुलसदृशमंजलिंशिरस्याधायानंतरंदक्षिणेनपाणिनास्वर्णपूर्णकलशंधारयित्वाआशिषः प्रार्थयेत् ॥ ८ ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच ॥ तेनायुःप्रमाणेनपुण्यंपुण्याहंदीर्घमायुरस्तु ॥ विप्राः अस्तुदीर्घमायुः । ओं त्रीणिपदाविचंक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयंन् ॥ १ ॥ तेनायुः प्रमाणेनपुण्यंपुण्याहं दीर्घमायुरस्तुइतिभवन्तोब्रुवंतुइतियजमानः ॥ २ ॥ पुण्यंपुण्याहंदीर्घमायुरस्त्वितिद्विजः ॥ एवंद्विरपरंशिरसिभूमौनिनयेत् ॥ ब्राह्मणान् हस्ते ओं शिवाऽआपः संतुजलमिति यजमानः ॥ संतुशिवाआपइति ब्राह्मणाः एवं सर्वत्रवचनोत्तरंदद्युः ॥ २ ॥ यज० सौमनस्यमस्तुइतिपुष्पं ॥ वि० अस्तुसौमन

१ टि० अपाम्मध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठिताः ॥ ब्राह्मणानांकरेन्यस्तः शिवाऽआपोभवंतुते ।

२ टि० लक्ष्मीर्वसतुपुष्पेषुलक्ष्मीर्वसतु पुष्करे ॥ सामेवसतुवैनित्यंसौमनस्यंतथास्तुनः ॥

स्यं ॥ यज० अक्षतंचारिष्टंचास्तुइत्यक्षतान्० ॥ विप्राः अस्त्वक्षतमारिष्टंच ॥ यज० गंधाः पांतुइतिगंधं० ॥ विप्राः सुमङ्गल्यंचास्तु ॥ यज० अक्षताः पांतु ॥ विप्राः आयुष्यमस्तु ॥ यज० पुष्पाणिपांतु ॥ विप्राः सौश्रियमस्तु ॥ यज० सफलतांबूलानिपांतु ॥ विप्राः ऐश्वर्यमस्तु ॥ यज० दक्षिणाः पांतु ॥ विप्राः बहुदेयंचास्तु॥ य०पुनरत्रक्षताः पान्तु॥ वि० स्वर्चित मस्तु ॥ यज० दीर्घमायुः शांतिः पुष्टिस्तुष्टिः श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंबहुधनंचा युष्यंचास्तु ॥ विप्राः तथास्तु ॥ य० यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाः शोभनाः प्रवर्तंतेतमहमोंकारमादिंकृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवाद्भिरनु ज्ञातं पुण्यंपुण्याहंवाचयिष्ये ॥ विप्राः वाच्यतां ओं द्रविणोदाः पिंपीषातिजुहोतप्रचंति

१ टि० अक्षतंचास्तुमेपुण्यंदीर्घमायुर्यशोबलम् ॥ यद्यच्छ्रेयस्करंलोकेतत्तदस्तुसदामम ॥ २ ॥

घृत ॥ नेष्ट्राद्दतुभिरिष्यत ॥ १ ॥ सुविता त्वांसवानां सुवतामाग्निर्गृहपतीना सोमो वनस्पतीनाम् ॥ बृहस्पतिर्वाचऽइन्द्रोज्यैष्ठ्यायरुद्रः पशुभ्योमित्रः सत्योवरुणोधर्मपती नाम् ॥ १ ॥ नतद्रक्षां सिनपिशाचास्तरंतिदेवानामोजं प्रथमजं ह्येतत् ॥ योबि भर्ति दाक्षायणं हिरण्य सदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ उच्चातेजातमंधसोदिविसद्भूम्यादद‍े ॥ उग्र शर्ममहिश्रवः ॥ ४ ॥ उपास्मैगायतानरः पवमानायेन्दवे ॥ अभिदेवाँऽइयक्षते ॥ ५ ॥ ओं इत्येतार्थ्यः पुण्याहेब्रूयात ॥ व्रतज पनियमतपःस्वाध्यायक्रतुशमदमदयादानविशिष्टानां सर्वेषांब्राह्मणानां मनः समाधीयतां इतियज० ॥ समाहितमनसः स्मः इतिब्रा० ॥ प्रसीदंतुभवन्तः इतिय० ॥ प्रसन्नास्मः इति

ग्रा० ॥ ततोयजमानोब्रूयात् । शांतिरस्त्वित्यादि । अस्त्वितिद्विजाः प्रतिवचनंसर्वत्रदद्युः । ओं शांतिरस्तु ॥ १ ॥ ओं पुष्टिरस्तु ॥ २ ॥ ओं तुष्टिरस्तु ॥ ३ ॥ ओं वृद्धिरस्तु ॥ ४ ॥ ओं अविघ्नमस्तु ॥ ५ ॥ ओं आयुष्यमस्तु ॥ ६॥ ओं आरोग्यमस्तु ॥७॥ ओं शिवमस्तु॥८॥ ओं शिवंकर्मास्तु ॥ ९ ॥ ओं कर्मसमृद्धिरस्तु ॥ १० ॥ ओं धर्मसमृद्धिरस्तु ॥ ११ ॥ ओं वेदसमृद्धिरस्तु ॥ १२ ॥ ओं शास्त्रसमृद्धिरस्तु ॥ १३ ॥ ओं धनधान्यसमृद्धिरस्तु ॥ १४ ॥ ओं पुत्रपौत्रसमृद्धिरस्तु ॥ १५ ॥ ओं इष्टसंपदस्तु ॥ १६ ॥ बहिः ओं अरिष्टनिरसनमस्तु ॥ १७ ॥ बहिः । ओं यत्पापंरोगंअशुभंअकल्याणंतद्दूरेप्रतिहतमस्तु ॥ १८ ॥ अंतः ओं यच्छ्रेयस्तदस्तु ॥ १९ ॥ ओं उत्तरेकर्मणिनिर्विघ्नमस्तु ॥ २० ॥ ओं उत्तरोत्तरमहरहरभिवृद्धिरस्तु । २१ । ओं उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् ॥ २२ ॥ ओं तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ २३ ॥ ओं तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ ओं तिथि

करणेससुमुहूर्तेसनक्षत्रेसग्रहेसलग्नेसाधिदैवतेप्रीयेताम् ॥ ओं दुर्गापाञ्चाल्यौप्रीयेताम् ॥ ओं अग्निपुरोगाविश्वेदेवाः प्रीयन्ताम् ॥ ओं इन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम् ॥ ओं वसिष्ठपुरोगाः ऋषिगणाः प्रीयन्ताम् ॥ ओं माहेश्वरीपुरोगाः उमामातरः प्रीयन्ताम् ॥ ओं अरुंधतीपुरोगाएकपत्न्यः प्रीयन्ताम् ॥ ओं विष्णुपुरोगाः सर्वेदेवाः प्रीयन्ताम् ॥ ओं ब्रह्मपुरोगाः सर्वेवेदाः प्रीयन्ताम् ॥ ब्रह्मचब्राह्मणाश्वप्रीयन्ताम् ॥ ओं श्रीसरस्वत्यौप्रीयेताम् । ओं श्रद्धामेधेप्रीयेताम् ॥ ओं भगवतीकात्यायनीप्रीयताम् ॥ ओं भगवतीमाहेश्वरीप्रीयताम् ॥ ओं भगवतीऋद्धिकरीप्रीयताम् । ओं भगवतीवृद्धिकरीप्रीयताम् ॥ ओं भगवतीपुष्टिकरीप्रीयताम् । ओं भगवतीतुष्टिकरीप्रीयताम् । ओं भगवंतौविघ्नविनायकौप्रीयेताम् । ओं सर्वाः कुलदेवताः प्रीयन्ताम् ॥ ओं सर्वाः ग्रामदेवताः प्रीयन्ताम् ॥ ओं सर्वाः इष्टदेवताः प्रीयन्ताम् ॥ बहिः ओं हताश्चब्रह्मद्विषः ॥ ओं हताश्चपरिपन्थिनः ॥ ओं हताश्चविघ्नकर्त्तारः शत्रवः पराभवंयांतु ॥

ओं शाम्यंतुघोराणि ॥ ओं शाम्यंतुपापानि ॥ ओं शाम्यंत्वीतयः ॥ ओं शाम्यंत्युपद्रवाः ॥ अन्तः ओं शुभानिवर्धंताम् ॥ ओं शिवाआपः सन्तु ॥ ओं शिवाऋतवः सन्तु ओं शिवाओषधयः सन्तु ॥ ओं शिवावनस्पतयः सन्तु ॥ ओं शिवाअतिथयः सन्तु ॥ ओं शिवाग्नयः सन्तु ॥ ओंशिवाहुतयः सन्तु ॥ ओं अहोरात्रेशिवेस्याताम् ॥ ओं निकामेनिकामेन ः पर्जन्योवर्षतुफलवत्योनऽ ओषधयः पच्यन्तांयोगक्षेमोनः कल्पताम् ॥ १ ॥ ओं निकामेनिकामेन ः पर्जन्योवर्षत्विति निकामेनिकामेवैतत्र पर्जन्योवर्षति यत्रैतेनयज्ञेनयजन्तेफलवत्यो नऽओषधयः पच्यन्तामिति फलवत्योवै तत्रौषधयः पच्यन्ते यत्रैतेनयज्ञेनयजन्ते योगक्षेमोनः कल्पतामितियोगक्षेमोवैतत्रकल्पते यत्रैतेन यज्ञेन यजन्तेतस्माद्यत्रैतेनयज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमोभवति ॥ ओं शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहितादित्यपुरोगाः

सर्वेग्रहाः प्रीयन्ताम् ॥ ओं भगवान्नारायणः प्रीयताम् ॥ ओं भगवान्पर्जन्यः प्रीयताम् ॥ ओं भगवान्स्वामीमहासेनः प्रीयताम् ॥ पुरोनुवाक्ययायत्पुण्यं तदस्तु ॥ याज्ययायत्पुण्यं तदस्तु ॥ वषट्कारेणयत्पुण्यंतदस्तु ॥ प्रातः सूर्योदयेयत्पुण्यं तदस्तु ॥ एतत्कल्याणयुक्तं पुण्यं पुण्याहंवाचयिष्येइति यजमानः ॥ ओं वाच्यतामिति ब्राह्मणाः ॥ ओं ब्राह्मचंपुण्यंमहर्य्यंच्चसृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुनः । भोब्राह्मणाः मयाक्रियमाणस्य अमुकाख्यस्यकर्मणः पुण्याहंभवंतोब्रुवंतु इति यज० ॥ ओं पुण्याहं ब्रा० एवं वचनं प्रतिवचनंचत्रिः पठित्वा तथाहि ॥ अस्यकर्मणः पुण्याहंभवन्तोब्रुवंन्तु ॥ ओं पुनंतुं मादेवजुनाः पुनन्तुमनंसाधियं-ः- ॥ पुनन्तुविश्वाभूतानिजातंवेदः पुनीहिमां ॥ २ ॥ ओं सयुः काम येतमहत्प्राप्नुयामित्युदगयनऽआपूर्यमाणपक्षेपुण्याहे द्वादशाहमुपसद्व्रतीभूत्वौदुंवरेक ऽ सेच

मसेवासर्वै पधुम्फलानीतिसम्भृत्यपरिसमुह्यपरिलिप्याग्निमुपसमाधायावृताऽऽज्य १ संस्कृत्यपु १
ण्यानक्षत्रेणमन्थे १ सन्नीयजुहोति ॥ पृथिव्यामुद्धृतायांतुयत्कल्याणं पुराकृतम् ॥ ऋषिभिः
सिद्धिगंधर्वैस्तत्कल्याणंब्रुवंतुनः ॥ २ ॥ भोब्राह्मणाः मयाक्रियमाणस्य अमुकाख्यस्य कर्मणः
कल्याणंभवंतोब्रुवंतु ॥ ओं कल्याणं ॥ ३ ॥ ओं यथेमांवाचंकल्याणीमावदानिजनेभ्यः ॥
ब्रह्मराजन्याभ्या ँ शूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभूयास
मयंमेकाम ः समृध्यतामुपमादोनमतु ॥ २ ॥ ओं अथाध्वर्यौः प्रतिगरोरात्सुरिमेयजमाना
भद्रमेभ्योयजमानेभ्योभूदिति कल्याणमेवैतन्मानुष्यैवाचोवदति ॥ सागरस्यतु याऋद्धिर्महा
लक्ष्म्यादिभिः कृता ॥ संपूर्णाःस्युः प्रभावाचतांऋद्धिंप्रब्रुवंतुनः ॥ ३ ॥ भो ब्राह्म० कर्मणः
ऋद्धिंभवन्तोब्रुवन्तु ॥ ओं कर्मऋध्यताम् ॥ ओं सत्रस्यऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ॥

दिवं पृथिव्याऽअध्यारुहामाविदामदेवान्स्वर्ज्योतिः ॥ ४ ॥ ओं तऽउत्तरस्यहविधानस्यजघन्यायाङ्कर्यां ॐ सामाभिगायत्तिसत्रस्यऽ ऋद्धिरितिराद्धिमेवैतदभ्युत्तिष्ठंत्युत्तरवेदेर्वोत्तरायां ॐ श्रोणावित्तरन्तुकृतुकृतरम् ॥ स्वास्तिस्तुयाविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांचस्वस्तिंब्रुवन्तुनः ॥ भोब्राह्मणाः ० कर्मणेस्वस्तिभवन्तोब्रुवन्तु ॥ ओं आयुष्मते स्वस्ति ॥ ओं स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ४ ॥ ओं गातुभ्यज्ञायगातुभ्यज्ञपतयऽइति गातुं ह्येषयज्ञायेच्छातिगातुभ्यज्ञपतयेयोयज्ञस्यस ६ स्थान्देवीस्वस्तिरस्तुनः स्वस्तिर्मानुष्येभ्यऽइतिस्वस्तिनोदेवत्रास्तुस्वस्तिर्मानुष्यत्रेत्येवैतदाहोर्ध्वं जिगातुभेषजमित्युर्ध्वोनोयभ्यज्ञोदेवलोकभ्यज-

त्वित्येवैतदाहशन्नोअस्तुद्विपदेशञ्चतुष्पदऽइत्येतावद्वाऽइद ँ सर्वंय्यावद्द्विपाच्चैव चतुष्पाच्चतस्माऽ
एवैतद्यज्ञस्यस ँ स्थाङ्करोतितस्मादाहशन्नोऽअस्तुद्विपदेशञ्चतुष्पदे ॥ समुद्रमथनाज्जाता
जगदानंदकारिका ॥ हरिप्रिया च माङ्गल्यातांश्रियं च ब्रुवन्तुन ः ॥ भोब्राह्म० कर्मणः श्रीर
स्त्विवतिभवन्तोब्रुवन्तु ॥ ओं अस्तुश्रीः ॥ ओं श्रीश्चतेलक्ष्मीश्चपत्न्यांवहोरात्रेपार्श्वेनक्षत्राणिरूपम
श्विनौव्यात्तंम् ॥ इष्णन्निषाणामुम्मंऽइषाणसर्वंलोकम्मं इषाण ॥ ९ ॥ ओं तेनोहतुतऽइजेदक्षः
पार्वतस्तऽइमेष्येतर्हि दाक्षायणाराज्यमिवैवप्राताराज्यमिवहवैवप्राप्नोतियऽ एवं विद्वानेतेनयज्ञेन
यजन्ते तस्माद्वाऽएतेनयजेत सवाऽएकैकऽएवानूचिनाहं पुरोडाशोभवत्येतेनोहास्यासपत्नानुपवा
घाश्रीर्भवाति ॥ मृकंडसूनोरायुर्यद्धवलोमशयास्तथा ॥ आयुषातेनसंयुक्ताजीवेमशरदः

शतम् ॥ १ ॥ जीवंतुभवंतः इति म०॥ ओं शतमिन्नुशरदोऽअंतिदेवायत्रांनश्च क्राजरसंतनूनांम् ॥ पुत्रासोयत्रंपितरोभवंन्तिमानोंमध्यारीरिषतायुर्गंतोः ॥ शिवगौ-रीविवाहेयायाश्रीरामेनृपात्मजे ॥ धनदस्यगृहेया श्रीरस्माकंसास्तुसद्मनि ॥ ओं अस्तुश्रीः ॥ ओं मनंसः काममाकूतिंव्वाचः सत्यमशीय ॥ पशूना रूपमन्नंस्यरसो यशः श्री श्रंयतांमयिस्वाहा ॥ १ ॥ प्रजापतिर्लोकपालोधाताब्रह्माचदेवराट् ॥ भगवाञ्छाश्वतोनित्यंनोवैरक्षन्तुसर्वतः ॥ ओं भगवान्प्रजापतिः प्रीयताम् ॥ ओं प्रजा पतेनत्वदेतान्यन्योव्विश्वारूपाणिपरिताबंभूव ॥ यत्कांमास्तेजुहुमस्तन्नोअंस्तुवयमस्याम पितासावस्यपिताव्वय स्यांमपतयोरयीणां स्वाहा ॥ २ ॥ आयुष्मतेयजमा नायदाशुषे ॥ श्रियेदत्ताशिषः सन्तुऋत्विग्भिर्वेदपारगैः ॥ ओं आयुष्मतेस्वस्ति ॥ ओं प्रतिप

न्यांमपञ्चाहिस्वस्तिगार्मनेहसंम् ॥ येनविश्वाः परिद्विषोंव्वृणार्क्तिविन्दतेवसुं ॥ ओं स्वस्तिवाचनसमृद्धिरस्तु ॥ कृतस्यस्वस्तिवाचनकर्मणंः समृध्यर्थंस्वस्तिवाचकेभ्योब्राह्मणेभ्यइमांदक्षिणांविभज्यदातुमहमुत्सृजे ॥ अथाभिषेकः ॥ आभिषेकेषत्नीवामतः एकस्मिन्पात्रेवरुणोदकंगृहीत्वाऽविधुराश्चत्वारोब्राह्मणाः दूर्वाम्रपल्लवैः सकुटुंबंयजमानमभिषिंचेयुः तन्मन्त्राः ॥ ओं पयः- पृथिव्यां० ॥ १ ॥ ओं पंचनद्यः ॥ २ ॥ ओं वरुणस्यो० ॥ ३ ॥ ओं पुनन्तुंमा० ॥४॥ ओं देवस्यंत्वासवितुः प्रसवेंश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैव्वाचोयन्तुर्यंत्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ५ ॥ देवस्यंत्वा० ॥ सरस्वत्यैव्वाचोयन्तुर्यंत्रेणाग्नेः साम्राज्येनाभिषिंचामि ॥६॥ देवस्यंत्वा० ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामि ॥७॥ ओं विश्वानिदेवसवितर्दुरितानिपरांसुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ८ ॥ धामच्छदग्निरिन्द्रो

ब्रह्मादेवोबृहस्पति-ः- ॥ सचेतसोविश्वेदेवायज्ञंप्रावन्तुनः शुभे ॥ ९ ॥ त्वंयविष्ठदाशुषोनॄः पाहिशृणुधीगिरः-ः- ॥ रक्षातोकमुतत्मना ॥ १० ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः-ः- । प्रप्रदातारंतारिषऽऊर्जन्नोधेहिद्विपदेचतुष्पदे ॥ ११ ॥ ओं पालाशंभवतितेनब्राह्मणोभिषिंचतिब्रह्मवैपलाशो ब्रह्मणैवैनमेतदभिषिंचाति । औदुंबरंभवतितेनस्वोभिषिंचत्यन्नंवाऽऊर्गुदुम्बरऽऊर्ग्वैस्वंयावद्वैपुरुषस्यस्वंभवतिनैवतावदशनायतितेनोर्कूस्वंतस्मादौदुंबरेणस्वोभिषिंचाति ॥ नैयग्रोधपादंभवतितेनमित्रोराजन्योभिषिंचाति पद्भिर्वैन्यग्रोध ः प्रातिष्ठितोमित्रेणैवराजन्यः प्रतिष्ठितस्तस्मान्नैय्यग्रोधपादेनमित्रोराजन्योभिषिंचाति । आश्वत्थंभवति तेनवैश्योभिषिंचाति सयदेवादोश्वत्थेतिष्ठतऽइन्द्रोमरुतऽउपामंत्रयतेतस्मादाश्वत्थेनवैश्योभिषिंचाति ॥१२॥ यद्देवकुलपा

॰जुहोतिप्राणावैकल्पाऽअमृतमुवैप्राणाऽअमृतेनैवैनमेतदभिषिंचति । सर्वेषांवाऽएषवेदाना ँ
रसोयत्सामसर्वेषामेवैनमेतद्वेदाना ँ रसेनाभिषिंचति ॥ द्यौ ँ शान्तिंरंत० ॥१३॥ बतोयतः
स० । १४ । अमृताभिषेकोस्तु इतिपुण्याहवाचनप्रयोगः ॥ अविघ्नोमण्डपश्चैवमातॄणांपूजनं
सकृत् ॥ वैश्वदेवंवधोर्द्वारांनांदीश्राद्धमतः परम् ॥ विवाहोपनयनचूडाकर्णक्षीमंतोन्नयनादौ
मोदश्चैवप्रमोदश्चसुमुखोदुर्मखस्तथा । अविघ्नोविघ्नहर्ताचषडेतेविघ्ननायकाः ॥ ओं मोदा
यनमः मोदं आ० ॥ १ ॥ ओं प्रमोदाय०प्रमोदं आ० ॥ २ ॥ ओं सुमुखाय० सुमुखं आ० । ३ ।
ॐ दुर्मुखाय० दुर्मुखं० । ४ । ॐ अविघ्नाय० अविघ्नं आ० ॥ ५ ॥ ॐ विघ्नहर्त्रे० विघ्नह
र्तार० ॥ ६ ॥ ओं० मोदादिषड्विनायकेभ्योनमः इति पूजयेत् इति अविघ्नपूजनम् । अथ मण्ड
पदेवताप्रतिष्ठा ॥ ततोमंण्डपार्थस्तंभारोपणं तद्यथा । ओं देवस्यत्वास० भ्यांइत्यभ्रिमादत्ते । १ ।

ओं इदमह ऽ रक्षसांग्रीवाऽ अपिकृन्तामि । इत्यवटंपरिलिखति । २ । ओं मावोंरिषत्खनि तायस्मैचाहंखनामिव ः ॥ द्विपाच्चतुष्पादस्माक ऽ सर्वमस्त्वनातुरम् ॥ इति खनति ॥ ३ ॥ ओं सिंचंतिपरिषिंचंत्सिंचंतिपुनंतिचं ॥ सुरायैबभ्रुमदेकिंत्वोव्वदातिकिंत्व ः इति तस्मिन्नव-टेअपः आसिंचति ॥ ४ ॥ ॐ यवोसियवयास्मद्द्वेषोयवयारांती ः ॥ इतियवानावपति ॥ ५ ॥ दर्भसिद्धार्थकांस्तूष्णीमावपति ॥ ओं कांडात्कां० च इतिदूर्वाङ्कुरान् ॥ ६ ॥ ओं दधिक्राव्णो०त् इतिदधि ॥ ७ ॥ ओं या ः फलिनी०सः इतिफलम् ॥ ८ ॥ ओं हिरण्यगर्भः० म इति हिरण्यंचावपति ॥ ९ ॥ ओंउच्छ्रयस्ववनस्पत ऽऊर्ध्वोमापाह्य ऽ हंसऽ अस्ययज्ञस्योदृच ः । इतिमन्त्रेणरक्तसूत्रबद्धमदनफलसमन्वितस्तंभोत्थापनम् ॥ १० ॥ ओं ऊर्ध्वऽ ऊषुणऽऊतये

तिष्ठांदेवोनसंविता ॥ ऊर्ध्वोवाजस्यसनितायदंजिभिर्वाघद्भिर्विव्हयांमहेइत्यवटेरोपणं ॥ ओं स्थिरोभवविह्वंगऽआशुर्भववाज्यर्वन् ॥ पृथुर्भवसुखदस्त्वमग्ने ः पुरीषवाहण ः ॥ इतिसमंततोमृत्पूर्णेन स्थिरकरणम् ॥ तस्मिन्स्तंभे ॥ ओं नलिन्यैनमः ॥ १ ॥ ओं नन्दिन्यै०॥२ ॥ ओं मैत्रायै० ॥३॥ ओं उमायै० ॥ ओं पशुवर्द्धिन्यै० ॥५॥ ओं मनोजु० इ मण्डपदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु इति प्रतिष्ठाप्य ॥ ओं मण्डपदेवताभ्योनमः इति षोडशोपचारैरभ्यर्चनम् । मण्डपदेवताप्रीत्यर्थंयथाशक्तिब्राह्मणान्भोजयिष्ये ॥ अत्रशिष्टाचारएवशरणं । मण्डपप्रतिष्ठातुसीमंतोन्नयनान्नप्राशनचूडाकरणोपनयनवेदारंभकेशांतव्रतविसर्गविवाहेषुकार्या ॥ तत्रैवमंडपसत्वात् मंडपस्तंभानिवेशनंतु ॥ वृषाद्राशित्रयेस्थितेसूर्येसति आग्नेयांकार्यम् ॥ सिंहाद्राशित्रयेईशान्याम् ॥ वृश्चिकाद्राशित्रयेवायव्यां ॥ कुंभाद्राशित्रयेनैर्ऋत्यां ॥ इतिमण्ड

पदेवताप्रतिष्ठा ॥ अथमातृकापूजनम् । अथाग्नेय्यां प्रतिमास्वक्षतपुञ्जेषुवा प्राक्संस्थमुदक्सं स्थंवामातृस्थापनम् ॥ ओं भूर्भुवः स्वः गणपतये० गणपतिं आवाहयामिस्थापयामि । ओं भूर्भुवः स्वः गौर्यै न० ॥ गौरीमा० ॥ २ ॥ ओं पद्मायै० ॥ पद्मां ॥ ३ ॥ ओं शच्यै० ॥ शचीं ॥ ४ ॥ ओं मेधायै० ॥ मेधां ॥ ५ ॥ ओं सावित्र्यै० ॥ सावित्रीं ॥ ६ ॥ ओं विजयायै० ॥ विजयां० ॥ ७ ॥ ओं जयायै० ॥ जयां० ॥ ८ ॥ ओं देवसेनायै० देवसेनां० ॥ ९ ॥ ओं स्वधायै० स्वधां० ॥ १० ॥ ओं स्वाहायै० ॥ स्वाहां० ॥ ११ ॥ ओं मातृभ्यो० मातॄः ॥१२॥ ओं लोकमातृभ्यो० लोकमातृः० ॥ १३ ॥ ओं धृत्यै० ॥ धृतिमा० ॥ १४ ॥ ओं पुष्ट्यै० ॥ पुष्टिम्० ॥ १५ ओं तुष्ट्यै० ॥ तुष्टिं॥१६॥ ओं आत्मनः कुलदेवतायै० ॥ आत्मनः कुलदेवताम् ॥ १७ ॥ ओं मनो० बृ० गौर्याद्याः कुलदेवतांताः मातरोगणपतिसहिताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥ ओं गणपत्यादि कुलदेवतांतमातृभ्योनमः इत्यभ्यर्चनम् ॥ चूडाकरणोपनयनवि-

वाहेषुयथाकुलाचारंमातृभांडस्थापनम् ॥ अथवसोर्द्धारापूजनं ॥ आग्नेयांभित्तौकुंकुमादिना बिन्दुकरणेनांकरणङ्कृत्वागामिमन्त्रंपठन् घृतेन सप्तपञ्चवाप्राकूसंस्थादेकूवावसोर्द्धाराः कर्त्तव्याः ॥ वसोः पवित्रमसिशतधारं वसोः पवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोः पवित्रेणशतधारेणसुप्वा ॥ इतिमन्त्रेण ॥ ओं कामधुक्षऽइत्येतावतामन्त्रेणार्धभागेगुडेनैकीकरणं प्रतिधारामेकैकदेवतामावाहयेत् ॥ ओं श्रीयेनमः ॥ श्रियमा० ॥१॥ओं लक्ष्म्यैन० ॥ लक्ष्मीमा० ॥२॥ओं धृत्यै० ॥धृतिमा० ॥३॥ओं मेधायै० ॥मेधामा० ॥४॥ओं स्वाहायै० ॥ स्वाहां० ॥ ५ ॥ ओं प्रज्ञायै० ॥ प्रज्ञामा० ॥ ६ ॥ ओं सरस्वत्यै० ॥ सरस्वतीमा० ॥ ७ ॥ ॐ श्रीलक्ष्मीधृतिर्मेधास्वाहाप्रज्ञासरस्वती ॥ माङ्गल्येषुप्रपूज्यन्तेसप्तैताघृतमातरः ॥ १ ॥ ओं वसोर्धारादेवताभ्योनमइतिवाआवाह्य ॥ ओं मनो० वसोर्द्धारादेवताः सुप्रतिष्ठिताः वरदा भवन्तुसंपूज्यप्रार्थयेत् ॥ यदंगत्वेनभोदेव्यः पूजिताविधिमार्गतः ॥ कुर्वन्तुकार्यमखिलंनि

विघ्नेनक्रतूद्भवम् ॥ अनयापूजयावसोर्द्धारादेवताः प्रीयंतां० ॥ इतिवसोर्द्धाराकरणम् ॥ अथा युष्यमन्त्रजपः ॥ आयुष्यंवर्चस्य ५ रायस्पोषमौद्भिदम् ॥ इद ५ हिरण्यंवर्चस्वज्जैत्राया विशतादुमाम् ॥ १ ॥ न तद्रक्षां ५सि० युः ॥ २ ॥ यदावध्नंदाक्षायणाहिरण्य ५ शतानी कायसुमनस्यमाना ः ॥ तन्मऽआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासम् इत्यायुष्यमं त्रजपः ॥ अथ सांकल्पेनविधिनानांदीश्राद्धप्रयोगः सव्येनसर्वंकार्यम् ॥ ऋजवऽएवकुशा स्तिलार्थेयवादातव्याः ॥ ओं सत्यवसुसंज्ञकाः विश्वेदेवाः नांदीमुखाः भूर्भुवः स्वः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ १ ॥ ओ अमुकगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमु

---

टि० १ भविष्यपुराणे । पिण्डनिर्वपणंकुर्य्यान्नवाकुर्य्यान्नाराधिप ॥ वृद्धिश्राद्धेमहावाहोकुलधर्म्मानवेक्ष्यहि ॥

टि० २ अनस्मद्द्ध्वज्वदातामरूपाणामगोत्रिणाम् ॥ अनाम्नामतिलाद्यैश्चनान्दिश्राद्धंचसव्यवत् ॥

ख्यः भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ २ ॥ अमुकगोत्राः पितृ पितामहप्रपितामहाः नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ ३ ॥ ओं अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ ४ ॥ आसनदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नांदीमुखाः भूर्भुवः स्वः इमे आसनेवोनमोनमः ॥ १ ॥ ओं अमुकगोत्राः मातृपितामहिप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इमे आसनेवोनमोनमः ॥ २ ॥ आ अमुकगोत्राः पितृ पितामहप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इमे आसनेवोनमोनमः ॥ ३ ॥ ओं अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः नान्दीमुखाः भूर्भुवः स्वः इमे आसनेवोनमोनमः ॥४॥ ततोगन्धादिदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदंगधाद्यर्चनं स्वाहासंपद्यतांवृद्धिः ॥ १ ॥ ओंअमुकगोत्राः मातृपितामहिप्रपितामह्यः नान्दीमुख्यः भूर्भु

वः स्वः इदं गन्धाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ॥ २ ॥ ओं अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इदं गन्धाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ॥ ३ ॥ ओं अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः नान्दीमुखाः भूर्भुवः स्वः इदं गन्धाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ॥ ४ ॥ भोजननिष्क्रयदानम् ॥ ओं सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतां वृद्धिः ॥ १ ॥ ओं अमुकगोत्राः मातृपितामहिप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतांवृद्धिः ॥ २ ॥ ओं अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतांवृद्धिः ॥ ३ ॥ ओं अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः भुर्भुवः स्वः इदं युग्मब्राह्मण

भोजनपर्य्याप्तामान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतांवृद्धिः ॥ ४ ॥ सक्षीरयवंमुद-कदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम् ॥ १ ॥ गोत्राः मातृपिताम-हिप्रपितामह्यः नान्दीमुख्यः प्रीयंताम् ॥ २ ॥ गोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः प्रीयताम् ॥ ३ ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः नान्दीमुखाः प्रीयंताम् ॥ ४ ॥ शिवा ऽआपः संतु ॥ सौमनस्यमस्तु ॥ अक्षतं चारिष्टं चास्तु ॥ अघोराः पितरः सन्तु ॥ इति पूर्वाग्रांजलधारांदद्यात् ॥ ततः कृतांजलिः प्रार्थयेत् ॥ य० ओं गोत्रं नोवर्धतांदातारोनोभिवर्धतांवेदाः संततिरेवच ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु अन्नं चनोबहुभवेदातिथींश्चलभेमहि ॥ याचितारश्चनः संतुमाचयाचिष्मकश्चन ॥ एताः

---

टि० १ तदुक्तंब्रह्माण्डपुराणे॥तथाक्षय्योदकस्थानेदद्यात्क्षीरयवोदकमिति ॥टि०२मातापितामहीचैवतथैवप्रपितामही॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पिताचप्रमातामहकादयः ॥ एतेभवन्तुसुप्रीताप्रयच्छन्तुचमङ्गलम् ॥

सत्याआशिषः संतु ॥ त्रा० संत्वेताः सत्याः आशिषः इति ॥ दक्षिणादानम् ॥
ओं सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य
फलप्रतिष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणीं दक्षिणांदातुमहमुत्सृजे ॥ १ ॥ ओं अमुकगो
त्राः मातृपितामहिप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्यफलप्रति
ष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणींदक्षिणांदातुमहमुत्सृजे ॥ २ ॥ ओं गोत्राः पितृपिता
महप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिध्यर्थं द्राक्षा
मलकयवमूलनिष्क्रयणींदक्षिणांदातुमहमुत्सृजे ॥ ३ ॥ ओं गोत्राः मातामहप्रमातामहवृद्धप्र
मातामहाः सपत्निकाः नान्दीमुखाः भूर्भुवः स्वः कृतस्यनान्दीश्राद्धस्यफलप्रतिष्ठासिध्यर्थं
द्राक्षामलकयवमूलनिष्क्रयणींदक्षिणांदातुमहमुत्सृजे ॥ ४ ॥ ओं उपास्मैगायतानरः पवमा
नाऽयेन्दवे ॥ अभिदेवाँऽइयक्षते ॥ १ ॥ इडामग्नेपुरुदꣳ सꣳ सनिगोः शश्वत्तम ꣳ हवमानाय

साधं ॥ स्यान्नः सूनुस्तनयो विजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ २ ॥ य० अनेननांदीश्राद्धंसंपन्नम् ब्रा० ॥ सुसंपन्नं वाजेवाजेतिविसृज्य ॥ ओं वाजेंवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऋतज्ञा ÷ ॥ अस्यमध्व ÷ पिबतमादयंध्वं तृप्तायातपथिभिर्देवयानै ÷ ॥ आमावाजस्येत्यनुव्रज्य ओं आमावाजस्य प्रसवोजंगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमांगन्तांपितरामातराचामासोमोंअमृतत्वेनगम्यात् ॥ विश्वेदेवाः प्रीयन्तामितिविसृज्य ॥ य० मयाचरितेसांकल्पिकनान्दिश्राद्धेन्यूनातिरिक्तयो विधिः सऽउपविष्टब्राह्मणानां वचनाच्छ्रीगणेशप्रसादात् परिपूर्णोस्तु ॥ ब्रा० अस्तुपरिपूर्णः ॥ इति नान्दीश्राद्धप्रयोगः ॥ अथाचार्यादिवरणम् ॥ उदङ्मुखमाचार्यमुपवेश्य गन्धादिभिः संपूज्य ॥ ओं अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितः अमुकशर्मा यजमानोहं अमुकगोत्रोत्पन्नं अमुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गतवाज-

सनेयमाध्यंदिनीयशाखाध्यायिनं अमुकशर्माणं ब्राह्मणं अस्मिन्ग्रहशांत्याख्येकर्माणि ए-
भिर्वरणद्रव्यैः आचार्यत्वेन त्वामहंवृणे ॥ वृतोस्मि इति प्रतिवचनम् ॥ आचार्य-
स्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ १ ॥
अस्मिन् ग्रहशांत्याख्येकर्माणि एभिर्वरणद्रव्यैः अमुकगोत्रममुकशर्माणं ब्राह्मणं ब्रह्मत्वे-
नत्वामहवृंणे ॥ वृतोस्मि ॥ यथाचतुर्मुखोब्रह्मासर्वलोकपितामहः ॥ तथात्वंममयज्ञे
स्मिन् ब्रह्माभवद्विजोत्तम ॥ २ ॥ अस्मिन्० सदस्यत्वेनत्वामहं वृणे ॥ भगवन्सर्वधर्मज्ञ
सर्वधर्मभृतांवर ॥ विततेममयज्ञेस्मिन्सदस्योभवसुव्रत ॥ ३ ॥ अस्मिन्० गाणपत्यत्वेन
त्वामहवृंणे ॥ वांछितार्थफलावाप्त्यैपूजितोसिसुरासुरैः ॥ निर्विघ्नंक्रतुसंसिध्यैत्वामहंगणपंवृ
णे ॥ ४ ॥ अस्मिन्० उपद्रष्टृत्वेन त्वामहंवृणे ॥ भगवन्सर्वधर्मज्ञसर्वधर्मपरायण ॥ वित
तेममयज्ञेस्मिन्नुपद्रष्टाभवद्विज ॥ ५ ॥ अस्मिन्० ऋत्विक्त्वेनत्वामहंवृणे ॥ भगवन्सर्वध

मंज्ञसर्वधर्मपरायण । विततेममयज्ञेस्मिन्नृत्विक्त्वंमेमखेभव ॥ ६ ॥ ओं व्रतेनंदीक्षामांप्नोति दीक्षयांप्नोतिदक्षिणांम् ॥ दक्षिंणाश्रद्धामांप्नोतिश्रद्धयांसत्यमांप्यते ॥ अथ करसंपुटंकृत्वासर्वान् प्रार्थयेत् ॥ अस्मिन्कर्मणियेयेतुवृताग्रुरुमुखादयः ॥ सावधानाः प्रकुर्वन्तुस्वंस्वंकर्मयथोदितम् १ अस्ययागस्यनिष्पत्तौभवन्तोभ्यर्थितामया ॥ सुप्रसन्नैः प्रकर्तव्यंकर्मेदंविधिपूर्वकम् ॥ २ ॥ यथाविहितंकर्मकुरु ॥ यथाज्ञानंकरवाणि ॥ इत्याचार्यादिवरणम् ॥ आचार्यः आचम्यप्राणानायम्य देशकालौसंकीर्त्यअस्मिन् ग्रहशांत्याख्येकर्मणियजमानेनवृतोहंआचार्यकर्मकरिष्ये० आचार्यो वामहस्तेगौरसर्षपान् गृहीत्वा दिग्रक्षणंकुर्यात् तत्रमंत्राः ॥ रक्षोहणंवलगहनंवैष्णवीमिदमहं तंवलगमुत्किरामि यम्मे निष्ट्योयममात्योनिचखानेदमहं तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यम्मेसबन्धुयर्मसबन्धुर्निचखानंदमहंतंवलगमुत्किरामि

यम्मेंसजातोयंमसजातोनिचखानोत्कृत्याङ्किराम्मि ॥ १ ॥ रक्षोहणौंवोऽवलगहनः प्रोक्षांमिवैष्णवा न्रक्षोहणोंवोऽवलगहनो वंनयामि वैष्णवान्रक्षोहणो वोवलगहनोवंस्तृणामि वैष्णवान्रक्षोहणो वांऽवलगहनाऽउपंदधामि वैष्णवीरक्षोहणौंवांऽवलगहनौपर्यूहामि वैष्णवीवैष्णंमसि वैष्णवास्थ ॥ २ ॥ रक्षंसांभागोसिनिरस्त ऽ रक्षं ऽइदमह ऽ रक्षोभितिष्ठामीदमह ऽ रक्षोवंबाधऽइदमह ऽ रक्षो धमन्तमोनयामि ॥ घृतेनंद्यावापृथिवीप्रोर्णुवाथांवायोवेस्तोकानांमग्निराज्यंस्यवेतु स्वाहा स्वाहां कृतेऽउर्ध्वंनंभसंमारुतंगच्छतम् ॥ ३ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोंहते ॥ द्रोणेंसधस्थमा संदत् ॥ ४ ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुसत्सर्वंयत्रस्थंतत्रग च्छतु ॥१॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥२॥

अपक्रामंतु भूतानिपिशाचास्सर्वतोदिशम् ॥ सर्वेषामविरोधेनशांतिकर्मसमारभे ॥ ३ ॥ भूता
निराक्षसावापियेऽत्रतिष्ठन्तिकेचन ॥ तेसर्वेप्यपगच्छन्तुग्रहयागंकरोम्यहम् ॥ ४ ॥ इति तिष्ठ
न् पूर्वादिदिक्षुविकिरेत् उदकोपस्पर्शः । ततः पञ्चगव्यकरणं ॥ गायत्र्यागोमूत्रम् ॥ ओं तत्स०
गंधद्वारेतिगोमयम् ॥ ओं गंधद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामि
होपह्वयेश्रियम् ॥ २ ॥ अप्यायस्वेतिपयः ॥ ओं आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ।
भवावाजस्यसंगथे ॥ ३ ॥ दधिक्राव्ण इतिदधि । ओं दधिक्राव्णो० त् ॥ ४ ॥ तेजोसी
त्याज्यं ॥ ओं तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥
देवस्यत्वेतिकुशोदकं । ओं देवस्यत्वा० ॥ ६ ॥ ओं प्रणवेनयज्ञकाष्ठेनालोड्यआपोहिष्ठेतित्रि
भिर्मंत्रैःकर्मभूमिंयज्ञसंभारांश्चप्रोक्षयेत्० ततः कृतांजलिः स्वस्तिन० ॥ २ ॥ इतिमन्त्रद्वयं
पठेत्० भूमौप्रादेशंकृत्वा देवाः आयांतु० यातुधानाअपयांतु० विष्णोदेवयजनंरक्षस्व ततः

सर्वतोभद्रदेवतास्थापनं पूजनं कृत्वा ततः सर्वतोभद्रेकलशस्थापनविधिनाकलशंस्थाप्यकलशोपरिप्रधानप्रतिमांश्चस्थाप्यविधिनापूजयेत् ॥ ततोऽग्निस्थापनं कुण्डेस्थंडिलेवा ॥ कुण्डंचेत् उपरिमेखलायां श्वेतवर्णंविष्णुंपूजयेत् इदं वि० इतिमन्त्रेण ॥ मध्यमेखलायांरक्तवर्णंब्रह्मजज्ञा० इति मं० ब्रह्माणंसंपूज्य ॥ अधोमेखलायांकृष्णवर्णंनमस्ते० इति रुद्रंसंपूज्य अम्बेअंबि० इति मं० योन्यांरक्तवर्णांगौरींपूजयेत् ॥ अस्मिन् ग्रहशांत्याख्येकर्मणिपञ्चभूसंस्कारपूर्वकमाग्निस्थापनंकरिष्ये ॥ दर्भैः परिसमुह्यं० गोमयोदकेनोपलिप्य ॥ स्फेनस्रुवेण वोल्लिख्य ॥ अनामिकाङ्गुष्ठेनोद्धृत्य ॥ उदकेनाभ्युक्ष्य ॥ ओं अग्निंदूतमित्यग्निंस्थापयेत् ॥

१ टि०कुण्डवेदीप्रमाणंकुण्डसिद्धौ॥शतार्द्धेरत्निःस्याच्छतपरिमितेऽरत्निविततंसहस्रेहस्तस्यादयुतहवनेहस्तयुगलम् । चतुर्हस्तंलक्षेप्रयुतहवने षट्करमितंकक्कुद्भिर्वाकोटौनृपकरमपिप्राहुरपरे ॥ अरत्न्यादिप्रमाणं तत्रैव ॥ कृतमुष्टिकरोरात्निररत्निरकनिष्ठिकाइति ।

२ टि० तान्कुशानैशान्यांपरित्यज्य ॥

अथ सूर्यादिग्रहाणांस्थापनक्रमः ॥ स्कान्दे ॥ ईशानेमण्डलंकृत्वाग्रहाणांस्थापनंततः ॥ वृत्तमंडलमादित्यंअर्धचन्द्रंनिशाकरम् ॥ त्रिकोणंमङ्गलंचैवबुधं च धनुषाकृतिम् ॥ गुरुमष्टदलंप्रोक्तंचतुःकोणं च भार्गवम् ॥ नराकृतिंशनिंविंद्याद्राहुं च मकाराकृतिम् ॥ केतुंखड्गसमंज्ञेयंग्रहमंडलकेशुभे ॥ १ ॥ अथवा ॥ वृत्तमंडलमादित्यं चतुरस्रंनिशाकरम् ॥ त्रिकोणं मंगलं चैवबुधेवैबाणसन्निभम् ॥ गुरवेपट्टिशाकारं पञ्चकोणंभृगुस्तथा ॥ मन्देचधनुषाकारं शूर्पाकारंतुराहवे ॥ केतवेचध्वजाकारंमंडलानिक्रमेणतु ॥ शुक्राकौंप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ ॥ प्रत्यङ्मुखो शनी सोमौशेषादक्षिणतोमुखाः ॥ मध्येतुभास्करंविंद्याच्छशिनं पूर्वदक्षिणे ॥ दक्षिणेलोहितंविंद्याद्बुधंपूर्वोत्तरेणतु ॥ उत्तरेणगुरुंविंद्यात्पूर्वेणैवतुभार्गवम् ॥ पश्चिमेतुशनिंविंद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतंकेतुःइत्येषाग्रहसंस्थितिः ॥ आदित्याभिमुखास्सर्वेसाधिप्रत्यधिदेवताः ॥ अधिदेवतादक्षिणेवामेप्रत्यधिदेवताः ॥ अरुणौसूर्यभौ

मौचश्वेतशुक्रौनिशाकरौ ॥ हरितवर्णौबुधश्चैवपीतवर्णौगुरुस्तथा ॥ कृष्णवर्णौशनिराहू केत वस्तुतथैव च ॥ ततः पूर्वनिर्मितहस्तमात्रचतुरस्रग्रहवेद्यांश्वेतवस्त्रं प्रसार्यनवग्रहमंडलंविलिख्यमध्यादिकोष्ठेषुउक्तदिक्षुविदिक्षुसूर्यादिग्रहाणांस्थापनं पूजनं च कुर्यात् । अथ सूर्याद्यावाहनं ओं आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतं मर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ ओं भूर्भुवः स्वः कलिंगदेशोद्भवकाश्यपसगोत्ररक्तवर्णभोसूर्यइहागच्छइहतिष्ठसूर्यायनमः सूर्यमावाहयामिस्थापयामि ॥ १ ॥ ओं इमंदेवाऽअसपत्न सुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येंद्रियाय ॥ इममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकंब्राह्मणाना राजा ॥ २ ॥ ओं भू० यमुनातीरोद्भव आत्रेयसगोत्रशुक्लवर्णभोसोमइहागच्छइहतिष्ठसोमायनमः सोममावाहयामिस्थापयामि ॥ २ ॥

ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम् ॥ अपा ँ रेता ँ सि जिन्वति ॥ ओं
भू० अवंतिकापुरोद्भवभारद्वाजसगोत्ररक्तवर्णभोभौमइ० भौमाय० भौमं० ॥ ३ ॥ ओं
उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्ते स ँ सृजेथामयं च ॥ अस्मिन्सधस्थेऽअध्युत्तरस्मि
न्विश्वेदेवा यजमानश्चसीदत ॥ ओं भू० मगधदेशोद्भवआत्रेयसगोत्रहरितवर्णभोबुधइ० बुधाय०
बुधमा० ॥ ४ ॥ ओं बृहस्पतेअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋ
तप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ओं भू० सिंधुदेशोद्भवआंगिरसगोत्रपीतवर्णभो बृहस्प
तेइ० बृहस्पतये० बृहस्पतिं० ॥ ५ ॥ ओं अन्नात्परिस्रुतो रसंब्रह्मणाव्यपिबत्क्षत्रंपयः
सोमंप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानं ँ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदंपयोमृतंमधु ॥ ओं

भू० भोजकटदेशोद्भवभार्गवसगोत्रशुक्लवर्णभोशुक्रइ० शुक्राय० शुक्रं० ॥ ६ ॥ ओं शन्नो देवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः ओं भू० सौराष्ट्रदेशोद्भवकाश्यपसगोत्रकृष्णवर्णभोशनैश्चरइ० शनैश्चराय० शनैश्चरं० ॥ ७ ॥ ओं कयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ओं भू० राठिनापुरोद्भवपैठिनसगोत्रकृष्णवर्णभोराहोइ० राहवेन० राहुं० ॥ ८ ॥ ओं केतुंकृण्वंनकेतवेपेशोमर्याऽअपेशसे ॥ समुषद्भिरजायथाः ओं भू० अंतर्वेदिसमुद्भवजैमिनसगोत्रकृष्णवर्णभोकेतोइ० केतवे० केतुं० ॥ ९ ॥ ततोधिदेवतास्थापनंग्रहदक्षिणपार्श्वे ओं त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनम् ॥ उर्वारुकमिवबंधं



---

१ टि० स्कान्दे ॥ शिवः शिवागुहोविष्णुर्ब्रह्मेन्द्रयमकालकाः ॥ चित्रगुप्तोऽथभान्वादिदक्षिणेचाधिदेवताः ॥

नान्मृत्योर्मुक्षीयमामृतात् ॥ ओं भू० ईश्वरेहा० ईश्वराय० ईश्वरं० ॥ १ ॥ ओं श्रीश्चते० प
ओं भू० उमेहा० उमायै० उमां० ॥ २ ॥ ओं यदक्रन्दः प्रथमं जायमानऽउद्यन्त्समुद्रादुत
वापुरीषात् ॥ श्येनस्य पक्षाहरिणस्य बाहूउपस्तुत्यं महिजातन्ते अर्वन् । ओं भू० स्कंदेहा०
स्कंदाय० स्कन्दं० ॥ ३ ॥ ओं विष्णोरराटमसि विष्णो ; श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णो
र्ध्रुवोसि ॥ वैष्णवमसि विष्णवेत्वा ॥ ओं भू० विष्णोइ० विष्णवे० विष्णुं० ॥ ४ ॥ ओं
आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसीजायतामाराष्ट्रे राजन्यः शूरइषव्योतिव्याधी महारथो जायतांदो
ग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषाजिष्णूरथेष्ठाः ॥ सभेयो युवास्ययजमानस्य
वीरोजायतांनिकामेनिकामेनः पर्जन्योवर्षतुफलवत्योनओषधयः पच्यंतां योगक्षेमोनः-

कल्पताम् ओं भू० ब्रह्मन्० इ० ब्रह्मणे० ब्रह्माणं० ॥ ५ ॥ ओं सयोषाऽइन्द्रसगंणोमुरुद्भिः सोमंपिब वृत्रहा शूरविद्वान् ॥ जहिशत्रूँ २ रपमृधोनुदस्वाथाभंयंकृणुहिविश्वतोनः ओं भू० इन्द्रेहा०इन्द्राय० इंद्रं० ॥ ६ ॥ ओंयमायत्वांगिंरस्वते पितृमतेस्वाहां ॥ स्वाहांघर्मायस्वाहांघर्मः पित्रे ॥ ओं भू० यमइ० यमाय०यमं० ॥ ७ ॥ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोंऽअद्भिरंग्मतसमोषंधीभिरोषंधीः ओं भू० कालेहा० कालाय० कालम्० ॥ ८ ॥ ओं चित्रांवसोस्वस्तितेपारमंशीय ओं भू० चित्रगुप्तेहा० चित्रगुप्ताय० चित्रगुप्तम्० ॥ ९ ॥ ततः प्रत्यधिदेवतास्थापनंग्रहवामपार्श्वे ओं अग्निंदूतं पुरोदधेहव्यवाहमुपंब्रुवे ॥ देवाँऽ आसांदयादिह १ ओं भू० अग्नेइ० अग्नये० अग्निम् ० ॥ १ ॥ आपोहि

टि० १ स्कान्दे ॥ अग्निरापोधराविष्णुश क्रेन्द्राणीपितामहाः ! पन्नगाकः क्रमाद्वामेग्रहप्रत्यधिदेवताः ॥

ष्ठा० ओं भू० अपऽइहागच्छतइहतिष्ठतअद्भ्योन० अपः आ० ॥ २ ॥ ओं स्योनापृथिवि०
ओं भू० पृथिविइ० पृथिव्यै० पृथिवीं० ॥ ३ ॥ ओं इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥
समूढमस्यपा ँ सुरेस्वाहा ओं भू० विष्णोइ० विष्णवे० विष्णुं० ॥ ४ ॥ ओं इन्द्रं आसा
न्नेताबृहस्पतिर्दक्षिणायज्ञः पुरएतुसोमं ÷ ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंतग्रम्
ओं भू० इन्द्रेहा० इन्द्राय० इन्द्रम्० ॥ ५ ॥ ओं अदित्यैरास्नासीन्द्राण्याउष्णीषः ॥ पूषा
सिघुमायंदीष्व ओं भू० इन्द्राणिइ० इन्द्राण्यै० इन्द्राणीं० ॥ ६ ॥ ओं प्रजापतेनत्वदेताग्य
न्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवय ँ स्यामपतयोरयीणाम् ॥
ओं भू० प्रजापतेइ० प्रजापतये० प्रजापतिम् ॥ ७ ॥ ओं नमोस्तुसर्पेभ्योयेकेच पृथिवी

मन्त्रं ॥ ये ऽअंतरिक्षेयेोदिवितेभ्यं-ः- सर्पेभ्योनमः ॥ ओं भू० सर्पाः इहागच्छत इहतिष्ठत० स र्पेभ्यो० सर्पान्० ॥ ८ ॥ [१]ओं ब्रह्मंजज्ञानंप्रथमंपुरस्ताद्विसीमत ः सुरुचोव्वेनआव ः ॥ स बुध्न्याऽउपमाऽअस्यविष्ठा ः सतश्चयोनिमसंतश्चाव्विवं-ः- ओं भू० ब्रह्मन्इइ० ब्रह्मणे० ब्रह्माणम्० ॥ ९ ॥ ततोविनायकादिपंचलोकपालदेवताः वास्तोष्पतिंक्षेत्रपालंचावाहयेत् ॥ ओं गणानां त्वा० ओं भू० गणपतेइ० गणतपये० गणपतिं० १॥ ओं अंबेऽअंबिके० ओं भू० दुर्गेइ० दु र्गायै० दुर्गां० ॥ ओं वायोयेतेसहस्रिणोरथासुस्तेभिरागंहि ॥ नियुत्वान्त्सोमंपीतये ओं भू० वायोइ० वायवे० वायुं० ॐ घृतंघृतपावान ः पिबतुवसांवसापावान ः पिबतांतरिक्षस्यहविरे सिस्वाहा ॥ दिशं-ः- प्रदिशऽआदिशोव्विदिशऽउदिशोदिग्भ्य ः स्वाहा० ॥ ओं भू० आकाश

१ टि० स्कांदे । गणेशश्चाम्बिकावायुराकाशश्चाश्विनौतथा ॥ ग्रहाणामुत्तरेपंचलोकपालाः प्रकीर्तिताः ॥

इहा० आकाशाय० आकाशं० ४। ओं यावांकशामधुंमत्याश्विंनासूनृतांवती ॥ तयांयज्ञंमिमि
क्षतम् ॥ ओं भू० अश्विनौ इहागच्छतं इहतिष्ठतं अश्विभ्यांनमः अश्विनौआवाहयामि० ५। ओं
वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्वेमहेप्रतितन्नोजुषस्वशन्नोभव
द्विपदेशंचतुष्पदे ॥ ओं भू० वास्तोष्पतेइ० वास्तोष्पतये० ६। वास्तोष्पतिं० ओं नहिस्प
शमविदंनन्यमस्माद्वैश्वानरात्पुरऽएतारमग्ने ः ॥ एमेनमवृधन्नमृताअमर्त्यंवैश्वानरंक्षेत्रजि
त्यायदेवाः ॥ ओं भू० क्षेत्राधिपतेइ० क्षेत्राधिपतये० क्षेत्राधिपतिमावा०७। अथमंडलाद्बाह्येदश
दिक्पालानावाहयेत्। ओं त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् ॥ ह्वया
मिशक्रंपुरुहूतमिन्द्रं ँ स्वस्तिनोमघवाधात्विन्द्रः-ओं भू० इन्द्रेहा० इन्द्राय० इन्द्रं १ ओं

१ टि० संग्रहे। इन्द्रोवह्निः पितृपतिर्नैरृतोवरुणोमरुत् ॥ कुबेरईशोब्रह्माचह्यनन्तोदशदिक्पतिः ॥

त्वन्नो अग्ने तवं देव पायुभिर्मघोनो रक्षतन्वश्च वंद्य ॥ त्राता तोकस्य तनयेगवामस्य निमेषेर्ठं रक्षंमाणस्तवंव्रते ओं भू० अग्नेइ० अग्नये० अग्निं० २ ओं युमायत्वांगिरस्वतेपितृ० ओं भू० यमेहा० यमाय० यमं० ३ ओं असुन्वंतमयंजमानमिच्छस्तेनस्येत्यामन्विंहितस्करस्य ॥ अन्यमस्मदिच्छसातंऽइत्यानमोदेविनिर्ऋतेतुभ्यंमस्तु ॥ ओं भू० निर्ऋतेइ० निर्ऋतये० निर्ऋतिं० ओं तत्वांयामि० ओं भू० वरुणइ० वरुणाय० वरुणं० ५ ओं आनोनियुद्भिः-शतिनीभिरध्वर ँ सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ओं भू० वायोइ० वायवे० वायुं० ६ ओं वयर्ठं सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतः सचेमहि ॥ ओं भू० सोमेहा० सोमाय० सोमं० ७ ओं तमीशानंज० ओं भू० ईशानेहा० ईशानाय० ईशानं० ८ ओं अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरंहूतौसयोषाः ॥ यः

श ६. संतेस्तुवतेघायिंपत्रऽइुन्द्रंज्येष्ठा ऽअस्माँ ऽअंवन्तुदेवाः ॥ पूर्वैशानयोर्मध्ये ॥ ॐ भूः ब्रह्मन्० ब्रह्मणे० ब्राह्मणं० ॥ ९ ॥ ॐ स्योनापृथिवि० निर्ऋतिपाश्चिमयोर्मध्ये ॥ ॐ भू० अनन्तेहा० अनन्ताय० अनन्तं० ॥ १० ॥ ओं मनोजूतिर्जु० ओं सूर्यादिअनन्तांतदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥ सूर्यादिअनन्तान्तदेवताभ्योनमः इति मन्त्रेण आसनाद्युपचारैः प्रत्येकमेकत्रवा कांडानुसमयेनपदार्थानुसमयेनवाषोडशोपचारैः संपूज्यप्रार्थयेत् ॥ ग्रहाऽ ऊर्ध्वाहुतयोव्यंतोविप्रां यमतिम् ॥ तेषांन्विशिंप्रियाणांवोहमिषमूर्ज ६ समग्रभमुपयामगृहीतोसीन्द्रांयत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रांयत्वाजुष्टतमम् ॥ गृहस्येशानदिग्भागे कलशस्थापनविधिना रुद्रकलशंसंस्थाप्य कलशेवरुणं असंख्यातरुद्रांश्चावाह्य पूजयेत् ॥ ओं असंख्याता सहस्राणियेरुद्राऽअधिभूम्यांम् । तेषां ४ सहस्रयोजनेवधन्वांनितन्मसि ॥ असंख्यातरुद्रे

ऽयो० असंख्यातरुद्राना० अथ कुशकंडिकाकरणं ॥ अग्नेर्दक्षिणतोब्रह्मासनम् ॥ अग्नेरुत्तरतः प्रणीतासनद्वयम् ॥ ब्रह्मासनेब्रह्मोपवेशनम् ॥ यावत्कर्मसमाप्यतेतावत्त्वंब्रह्माभव ॥ भवामी तिप्रतिवचनम् ॥ ब्रह्मानुज्ञातः प्रणीताप्रणयनं ॥ प्रणय ॥ ईशानादिपूर्वाग्रैः कुशैः परि स्तरणम् ॥ आग्नेयादीशानांतं ॥ ब्रह्मणोग्निपर्यंतं ॥ नैर्ऋत्याद्वायव्यान्तं ॥ अग्नितः प्रणीता पर्यंतं ॥ अथपात्रासादनं ॥ पश्चादुत्तरतोवास्यात् त्रीणिपवित्रेद्वे ॥ प्रोक्षणीपात्रं ॥ आज्य स्थाली ॥ चरुस्थाली ॥ संमार्गकुशाः पंच ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥

१ पंचाशताभवेद्ब्रह्मातदर्द्धेनतुविष्टरः ॥ऊर्ध्वकेशोभवेद्ब्रह्मालम्बकेशस्तुविष्टरः।दक्षिणावर्तब्रह्माचवामावर्तस्तुविष्टरः॥ विष्टरः सर्वयज्ञेषुलक्षणं परिकीर्तितम् ॥

२ पवित्रच्छेदनार्थंकुशत्रयम् ३ पवित्रकरणार्थसाग्रनमन्तरगर्भंकुशपत्रद्वयम् ॥

४ व्यासस्मृतौ ॥ स्रुवसम्मार्जनार्थन्तुकुशत्रयमुदीरितमिति ॥

५ तत्रैव ॥ उपयमनार्थमाख्याता त्रिषण्णवमिताः कुशाः ॥ वेणीरूपानिरोधार्थानिरोधेबहुभिः सुखमिति ॥

आज्यम् ॥ तण्डुलाः ॥ पूर्णपात्रम् ॥ वृषनिष्क्रयदक्षिणा ॥ उपकल्पनीयानिद्रव्याणिनिधाय ॥
पवित्रच्छेदनानि ॥ द्वयोरुपरित्रीणि निधाय ॥ द्वौमूलेनप्रदक्षिणीकृत्य ॥ त्रिभिश्छित्त्वा ॥
द्वौग्राह्यौ त्रिस्त्याज्यः ॥ प्रोक्षणीपात्रेप्रणीतोदकमासिच्य ॥ त्रिः पूर्णं ॥ पवित्राभ्यामुत्पवनम् ॥
प्रोक्षण्याः सव्यहस्तकरणम् ॥ दक्षिणेनोद्दिङ्गनम् ॥ प्रणीतोदकेनप्रोक्षणीनांप्रोक्षणम् ॥ प्रोक्षण्यु
दकेनआज्यस्थाल्याः प्रोक्षणम् ॥ चरुस्थाल्याः प्रो॰ ॥ संमार्गकुशानांप्रो॰ ॥ उपयमनकुशा
नांप्रो॰ ॥ समिधांप्रो॰ स्रुवस्यप्रो॰ ॥ आज्यस्यप्रो॰ ॥ तण्डुलानांप्रो॰ ॥ पूर्णपात्रस्य
प्रो॰ ॥ उपकल्पनीयानांपदार्थानांप्रो॰ ॥ असंचरे निधानं प्रणीताग्न्योर्मध्ये ॥ आज्य
स्थाल्यामाज्यनिर्वापः ॥ चरुस्थाल्यांप्रणीतोदकासेकपूर्वकंतण्डुलप्रक्षेपः ॥ ब्रह्मादक्षिणतः
आज्याधिश्रयणं चरोरधिश्रयणमाज्यस्योत्तरतः ॥ ज्वलदुल्मुकेनोभयोः पर्यग्निकरणम् ॥
इतरथावृत्तिः ॥ उदकोपस्पर्शः ॥ अर्धश्रितेचरौ अधोमुखस्यस्रुवस्यप्रतपनं ॥ संमार्गकुशैः

स्रुवस्योर्ध्वमुखस्यसंमार्जनम् ॥ बुध्न्यादारभ्यकुशैरग्रपर्यंतंसंमृज्य अग्रादारभ्य अधस्तान्मूलेर्मूलान्तं ॥ प्रणीतोदकेनाभ्युक्षणम् ॥ पुनः प्रतपनं दक्षिणदेशेनिधानम् ॥ आज्योद्वासनम् ॥ चरुपूर्वेणानयित्वाग्नेरुत्तरतः स्थापयेत् ॥ चरोरुद्वासनम् ॥ अग्नेरुत्तरतएवाज्यंप्रदक्षिणीकृत्य आज्यस्योत्तरतः चरुंस्थापयेत् ॥ आज्योत्पवनम् ॥ आज्यावेक्षणम् ॥ अपद्रव्यनिरसनम् ॥ प्रोक्षण्युत्पवनम् ॥ उपयमनकुशादानं ॥ तिष्ठत्समिदाधानं ॥ प्रोक्षण्युदकेनसपवित्रहस्तेन ईशानादि अग्नेः प्रदक्षिणंपर्युक्षणम् ॥ पवित्रयोः प्रणीतासुनिधानम् ॥ दक्षिणंजान्वाच्य ॥ ब्रह्मणाकुशैरन्वारब्धः ॥ स्रुवेणाज्यहोमः ॥ अग्नेरुत्तरभागे ॥ ओं प्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥ अग्नेर्दक्षिणभागे ॥ ओं इन्द्रायस्वाहा ॥ इदमिंद्रायनमम ॥ समिद्धतमे ॥ ओं अग्नयेस्वाहा ॥ इदमग्नयेनमम ॥ ओं सोमायस्वाहा ॥ इदंसोमायनमम ॥ ततः सूर्यादिग्रहाणां अधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोकपालदेवतानां इन्द्रादिदशदिक्पालदेवतानां च प्र

त्येकंसमिंत्तिलचर्वाज्यद्रव्यैः अष्टोत्तरशतमष्टाविंशतिमष्टौवाजुहुयात् ॥ अस्मिन्ग्रहशांतिकर्मणिइमानिहवनीयद्रव्याणियायायक्ष्यमाणदेवतास्ताभ्यस्ताभ्यः मयापरित्यक्तंनमम ॥ यथादैवतमस्तु ॥ इति कुशकण्डिकाकरणम् ॥ अथसूर्यादिनवग्रहाणां प्रणवादिस्वाहांतं होममन्त्राः ॥ ओं गणानांत्वा॰ धमुस्वाहा ॥ ओं अम्बेऽअ॰ नाम्स्वाहा ॥ १ ॥ ओं आकृष्णे॰ पश्यन् स्वाहा ॥ १ ॥ ओं इमन्देवाअ॰ राजा स्वाहा ॥ २ ॥ ओं अग्निर्मू॰ न्वतिस्वाहा ॥३॥ ओं उद्बुध्य॰ सीदतस्वाहा ॥ ४ ॥ ओं बृहस्प॰ चित्रम्स्वाहा ॥ ५ ॥ ओं अन्नात्प॰ मधुस्वाहा ॥ ६ ॥ ओं शन्नोदे॰ तुनः स्वाहा ॥ ७ ॥ ओं कयान॰ वृतास्वाहा ॥ ८ ॥ ओं केतुङ्कृ॰ यथास्वाहा ॥ ९ ॥ ओं त्र्यम्बकं॰ मृतात्स्वाहा ॥ १० ॥ ओं श्रीश्चते॰ इषाणस्वाहा ॥ ११ ॥ ओं यदक्रन्दः॰ अर्वन्स्वाहा ॥ १२ ॥ ओं विष्णोररा॰ वेत्वास्वाहा ॥ १३ ॥

टि०१ अर्कः पालाशखदिरोअपामार्गश्चपिप्पलः । औदुम्बरशमीदूर्वाकुशाश्चसमिधोनव ॥

ओं आब्रह्म० तामुस्वाहा ॥ १४ ॥ ओं सजोषा० तोनः स्वाहा ॥ १५ ॥ ओं यमायत्वां० पित्रेस्वाहा ॥ १६ ॥ ओं कार्षिर० पधीः स्वाहा ॥ १७ ॥ चित्राव० शीयस्वाहा ॥ १८ ॥ ओं अग्निन्दू० दिहस्वाहा ॥ १९ ॥ आपोहि० यचक्षसेस्वाहा ॥ २० ॥ ओं स्योनापृ० प्रथाः स्वाहा ॥ २१ ॥ इदम्ब्रि० सुरेस्वाहा ॥ २२ ॥ इन्द्रआ० ग्रमुस्वाहा ॥ २३ ॥ ओं आदित्यै० दीषपस्वाहा ॥ २४ ॥ ओं प्रजापते० णामुस्वाहा ॥ २५ ॥ ओं नमोस्तुस० नमः स्वाहा ॥ २६ ॥ ओं ब्रह्मज० विवः स्वाहा ॥ २७ ॥ ओं गणानां० धमुस्वाहा ॥ २८ ॥ ओं अम्बेऽअ० नीमस्वाहा ॥ २९ ॥ ओं वायोयेते० तयेस्वाहा ॥ ३० ॥ घृतंघृत० दिग्भ्यः स्वाहा ॥ ३१ ॥ ओं यावांक० तामुस्वाहां ॥ ३२ ॥ ओं वास्तोष्पते० ष्पदेस्वाहा ॥ ३३ ॥ ओं नहिस्पश० देवाः स्वाहा ॥ ३४ ॥ ओं त्रातारमि० त्विन्द्रः स्वाहा ॥ ३५ ॥ ओं त्वन्नोअग्ने० व्रतेस्वाहा ॥ ३६ ॥ ओं यमायत्वां० पित्रेस्वाहा ॥ ३७ ॥ ओं असुन्वंत०

मस्तुस्वाहा ॥ ३८ ॥ ओं तत्वायाo मीषोः स्वाहा ॥ ३९ ॥ ओं आनोनिo दानः स्वाहा ॥ ४० ॥ ओं वय ँ सोo माहिस्वाहा ॥ ४१ ॥ ओं तमीशानंo स्तयेस्वाहा ॥ ४२ ॥ ओं अस्मेरुद्राo देवाः स्वाहाo ॥ ४३ ॥ ओं स्योनापृo प्रथाः स्वाहा ॥ ४४ ॥ ततः प्रधानहोमः ॥ प्रधानहोमानन्तरं ब्रह्मादिमण्डलदेवताश्च एकैकयाज्याहुत्यायक्ष्येशेषेणस्विष्टकृदादिहोमः । ओं अग्नेनयंसुपथाराये ऽअस्मान्विश्वानिदेवव्वयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्ते नमऽउक्तिंविधेम ॥ १ ॥ ओं स्वाहा स्वधायुताग्नयेवैश्वानरायनमः इतिमंत्रेणाग्निंसंपूज्य ॥ ततोहुतशेषद्रव्यंगृहीत्वा ॥ ब्रह्मणान्वारब्धः स्विष्टकृद्धोमंकुर्यात् ॥ ओं अग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥ ततोभूरादिनवाहुतयः ॥ ओं भूः स्वाहा ॥ इदमग्नयेनमम ॥ ओं भुवः स्वाहा ॥ इदं वायवेनमम । ओं स्वः स्वाहा ॥ इदं सूर्या

यनमम ॥ ओं त्वन्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नि
तमः शोशुचानोविश्वाद्वेषां ᳪ सिप्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यांनमम ॥ ओं सत्व
न्नोअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुण ᳪ रराणोव्वीहिमृडीक ᳪ
सुहवोनऽएधिस्वाहा ॥ इदमग्नीवरुणाभ्यांनमम ॥ ओं अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमि
त्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषज ᳪ स्वाहा ॥ इदमग्नयेअयसेनमम । ओं
येतेशतंवरुणयेसहस्रंयज्ञियाः पाशावितत्तामहान्तः ॥ तेभिन्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्च
न्तुमरुतः स्वर्क्काः स्वाहा ॥ इदं वरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यश्चन
मम ॥ ओं उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यम ᳪ श्रथाय ॥ अथावयमादित्यव्रतेतवा
नागसोऽअदितयेस्यामस्वाहा ॥ इदं वरुणायादित्यायादितयेनमम ॥ ओं प्रजापतयेस्वाहा ॥

इदं प्रजापतयेनमम । इतिनवाहुतयः । अग्न्यायतनस्यसमंतादिक्षु विदिक्षु चदशदिक्पाला नांसदीपमाषभक्तजलयोदेयाः । ओं त्रातारमिंद्र० त्विंद्रः । इन्द्राय सांगायसपरिवारायसायु धायसशक्तिकायएतंसदीपमाषभबलिंसमर्पयामि ॥ भो इन्द्रस्त्वांदिशंरक्षबलिंभक्षममसकुटुं बस्यसपरिवारस्य आयुःकर्ता क्षेमकर्ताशुभकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव ॥ अने नबलिदानेनइन्द्रः प्रीयताम् ॥ एवंसर्वत्र १॥ ओं त्वन्नोअग्ने० अग्नयेसां० ॥ भोअग्नेदिशंरक्षब लिं० अ० अग्निः प्री० ॥ २ ॥ यमायत्वां० पित्र ॥ यमायसां० मि ॥ भोयमदि० बलिं० अ० यमः प्री० ॥ ३ ॥ ओं असुन्वंतम० निर्ऋतयेसां० ॥ बलिं० मि० । भोनिर्ऋतेदि० अ० निर्ऋतिः प्री० ॥ ४ ॥ ओं तत्वायामि० षीः वरुणायसां० ॥ भोवरुणदि० अ० वरुणः प्री० ॥ ५ ॥ ओं आनोनियु० नः वायवेसां० मि० ॥ भोवायोदि० अ० वायुः प्री० ॥ ६ ॥ ओं वय ँ सोम० हि ॥ सोमायसां० भोसोमदि० बलिं० अ० सोमः प्री० ॥ ७ ॥ ओं

तमीशानं० ये ॥ ईशानायसां० मि ॥ भोईशानादि० अ० ईशानः प्री० ॥ ८ ॥ ओं अस्मे रुद्रामे०वाः ॥ ब्रह्मणेसां० मि ॥ भोब्रह्मन्नादि० अ० ब्रह्माप्री० ॥ ९ ॥ ओं स्योनापृ० प्रथाः । अनन्ताय सां० मि ॥ भोअनन्तादि० बलिं० अ० अनन्तः प्री० ॥ १० ॥ ततोग्रहवे दीसमीपेग्रहादिभ्यः सदीपमाषभक्तबलयोदेयाः ओं आकृष्णेन० पश्यन् ॥ १ ॥ सूर्यायसां गायसपरिवारायसायुधायसशक्तिकायईश्वराग्निरूपाधिदेवताप्रत्याधिदेवतासहिताय एतं सदी पमाषभक्तबलिं समर्पयामि । भोसूर्यइमंबलिंगृहाणममसकुटुंबस्यसपरिवारस्यआयुः कर्ता क्षे मकर्ता शुभकर्ता शांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव । अनेनबलिदानेनसूर्यः प्रीयता म् ॥ १ ॥ ओं इमन्देवा० राजा ॥ सोमायसां० उमाऽरूपाधिदेवताप्रत्यधिदे० मि । भो सोम इमं बलिं० । अने० सोमः प्री० । २ । ओं अग्निर्मू० ति । भौमाय सां० स्कंदभूमि रूपाधिदेवताप्रत्यधिदे० मि । भो भौमइमं बलिं० । अनेन० भौमः प्री० ॥ ३ ॥ ओं उद्बु

ध्यस्वा० त । बुधायसां० नारायणविष्णुरूपाधिदेवताप्रत्याधिदेवतास० मि । भो बुध इमं ब० - अनेन० बुधः प्री० । ४ । ओं बृहस्पते० म् । बृहस्पतये सां० ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदे० मि । भोबृहस्पतेइमं ब० अनेन० बृहस्पतिः प्री० । ५ । ओं अन्नात्परि० । धु । शुक्रायसां० इन्द्रेन्द्राणिरूपाधिदेवताप्रत्यधिदे० मि । भोशुक्रइमं ब० । अनेन० शुक्रः प्री० ६ ओं शन्नोदेवी० नः । शनैश्चरायसां० यमप्रजापतिरूपाधिदेवताप्रत्यधिदे० मि । भोशनैश्चरइमं ब० । अनेन शनैश्चरः प्री० । ७ । ओं कयानश्चि० ता । राहवेसां० कालसर्परूपाधिदेवता० मि । भोराहोइमं ब० । अनेन० राहुः प्री० । ८ । ओं केतुंकृण्वं० थाः । केतवेसां० चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदे० मि । भो केतो इमं ब० । अनेन० केतुः प्री० ॥ १ ॥ ओं गणानांत्वा० म् । गणपतयेसां० मि । भोगणपतयेइमं० ब० । अनेन० गणपतिः प्री० । १ । ओं अम्बेऽअम्बिके० म् । दुर्गायैसांगायै० मि । भोदुर्गेइमं० आयुःकर्त्रिक्षे० शां० पु० तु ॥

वरदाभव। अनेन० दुर्गाप्री० ।२। वायोजे० ये ।वायवेसां० मि ॥ भोवायोइमं ब०। अने० वायुः प्री० ॥ ३ ॥ ओं घृतं घृत० हा ॥ आकाशायसां० मि ।भो आकाशइमं ब० अने० आकाशः प्री० ॥ ४ ॥ ओं यावांकशा० म् । अश्विभ्यांसांगाभ्यां० मि ।भोअश्विनौइ मंबलिं गृहीतंमम० आयुः कर्त्तारौ० वरदौभवतं । अ० अश्विनौप्रीयेताम् ।५ ।ओं वास्तो ष्पतेप्र० दे।वास्तोष्पतयेसां० मि । भोवास्तोष्पतेइमं० अने० वास्तोष्पतिः प्री० ६ अथ वादिक्पालेभ्यएकतन्त्रेणैकमेवबलिंदद्यात् । ओं प्राच्यै दिशे स्वाहावाच्यैदिशेस्वाहादक्षिणा येदिशे स्वाहावाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहावाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहावाच्यै दिशेस्वाहोर्द्ध्वायैदिशेस्वाहावाच्यैदिशेस्वाहावाच्यैदिशेस्वाहावाच्यैदिशे स्वहा ॥ इन्द्रादिद शदिक्पालेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतान् सदीपमाषभक्तब लीन्समपर्यामि ॥ भोभोइन्द्रादिदशदिक्पालाः सांगाः सपरिवाराः सायुधाः सशक्तिकाः

ममस० आयुष्कर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदाः भवत ॥ अनेनबलिदानेन इन्द्रादिदशदिक्पालाः प्रीयंताम् १ एवंसर्वेभ्योगृहेभ्यः एकतन्त्रेणैकमेवबलिं दद्यात् । ओं ग्रहाऊर्जा० म् सूर्यादिनवग्रहेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सश क्तिकेभ्यः अधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोकपालवास्तोष्पतिसहितेभ्यः एतं सदी पमाषभक्तबलिंसमर्पयामि ॥ भोभोसूर्यादिग्रहाः सांगाः सपरिवाराः सायुधाः सशक्तिकाः अधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोकपालवास्तोष्पतिसहिताः मम सकुटुंबस्य सप रिवारस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदाः भवन्तु ॥ अनेन बलिदानेन सूर्यादिग्रहाः प्रीयन्ताम् ॥ अथक्षेत्रपालबलिदानम् ॥ एकस्मिन् वंशादिपात्रे कुशानास्तीर्य तदुपरि मनुष्याहारचतुर्गुणं द्विगुणंवा माषभक्तदध्योदनं वा जलपात्रं च निधा यचतुर्मुखदीपं प्रज्वाल्य हरिद्राकुंकुमादिपताकायुतंकृत्वा ॥ ओं नहिस्पश० वा. क्षेत्रपालाय

नमः इति पंचोपंचारैः षोडशोपचारैर्वासंपूज्यप्रार्थयेत् । ओं नमो वै क्षेत्रपालस्त्वंभूतप्रेतगणैस्सह ॥ पूजाबलिंगृहाणेमंसौम्योभवतुसर्वदा ॥ १ ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ आयुरारोग्य मेदेहिनिर्विघ्नंकुरुसर्वदा ॥ २ ॥ ततोबलिदानम् ॥ क्षेत्रपालायसांगायसपरिवारायसायुधायस शक्तिकाय मारीगणभैरवराक्षसकूष्माण्डवेतालभूतप्रेतपिशाचडाकिनीशाकिनीपिशाचिनीग- णसहिताय एतं सदीपमाषभक्तबलिं समर्पयामि ॥ भोक्षेत्रपालक्षेत्रंरक्षबलिं भक्ष ममसकुटुंब स्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्त्ता वरदोभव ॥ अनेन बलिदानेनक्षेत्रपालः प्रीयताम् ॥ यजमानस्यमस्तकोपरिसकृद्भ्रामयित्वा ॥ अनवेक्षमाणेन दुर्ब्राह्मणेनशूद्रेणवाबलिं गृहीत्वा चतुष्पथे निक्षिपेत् । ततोयजमानस्तस्य पृष्ठतोद्वारपर्यन्तं



१ ॥ कर्मप्रदीपे ॥ गन्धपुष्पेधूपदीपौनैवेद्यऽइतिपंचकम् । पंचोपचारमाख्यातंपूजनेतत्वविद्बुधैः ॥

गत्वाजलं क्षिपेद्धिंकारेणेतिमन्त्रेण । ॐ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रंदतेस्वाहावक्रन्दाय स्वाहा प्रोथंतेस्वाहांप्रप्रोथायस्वाहांगन्धाय स्वाहांघ्राताय स्वाहानिविष्टायस्वाहोपविष्टायस्वाहास न्दितायस्वाहावलगंते स्वाहासिनायस्वाहां शयानायस्वाहांस्वपंतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबु द्धायस्वाहाविजृम्भमाणायस्वाहाविचृत्ताय स्वाहा स ँहानायस्वाहोपस्थितायस्वाहायना यस्वाहाप्रायणायस्वाहा ॥ यजमानः पाणिपादं प्रक्षाल्याचम्य ॥ ततः नारिकेलादिफलंरक्त वस्त्रवेष्टितं द्वादशषट्चतुः स्रुवेणगृहीतमाज्यं स्रुच्यां कृत्वा ओं पूर्णाहुत्यैनमऽइति षोडशोपचारैः संपूज्य पूर्णाहुतिंजुहुयात् । तत्र मन्त्राः ॥ ओं समुद्रादूर्म्मिर्मधुमाँऽउदारदुपा ँ शु नासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ वयं नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुः शृङ्गो

वमीद्गौरऽएतत् ॥ २ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकꣳ सूर्य्यऽएकञ्जजानवेनादेकꣳ स्वधयानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिन्धोरिवप्राध्वनेशूघनासोव्वातप्रमियः पतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ७ ॥ अभिप्रवन्तसमनेवयोषाः कल्याण्यः स्मयमानासोऽअग्निम् ॥ घृतस्यधाराः समिधोनसन्त

ताञ्जुषाणोहर्य्यतिजातवेदाः ॥ ८ ॥ कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाक
शीमि ॥ यत्रसोमः सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्यर्षतसुष्टुतिङ्ग
व्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥
धामन्तेविश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्त
मश्यामममधुमन्तन्तऽऊर्म्मिम् ॥ ११ ॥ पुनस्त्वादित्यारुद्रावसवः समिन्धताम्पुनर्ब्रह्माणोवसु
नीथयज्ञैः ॥ घृतेनत्वन्तन्वंवर्धयस्वसत्याः सन्तुयजमानस्यकामाः ॥ १२ ॥ सप्ततेऽअ
ग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधामप्रियाणि ॥ सप्तहोत्राः सप्तधात्वायज
न्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ १३ ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्याऽवैश्वानरऽमृतऽआ

जातमग्निम् ॥ कवि ऽ संग्राजमतिंथिञ्जनानामासन्नापात्रञ्जनयंतदेवाः ॥ १४ ॥ पूर्णादं
र्विपरापत सुपूर्णापुनरापंत ॥ वस्नेवव्विक्रीणावहा ऽ इषमूर्जं ऽ शतक्रतोस्वाहा ॥ १५ ॥ इद
मग्नयेवैश्वानरायवसुरुद्रादित्येभ्यः शतक्रतवेसप्तवतेअग्नयेअद्भ्यश्चनमम ॥ ततोवसोर्द्धारां
जुहुयात् ॥ ततमंत्राः ॥ ओं सप्ततेअग्नेसमिधः स० ॥ १ ॥ शुक्रज्योतिश्चचित्रज्योतिश्च
सत्यज्योतिश्चज्योतिष्मांश्च ॥ शुक्रश्चऽऋतपश्चात्यं ऽहाः ॥ २ ॥ ईदृङ्चान्यादृङ्सदृङ्चप्र
तिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥ ३ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ता
चविधर्त्ताचविधारयः ॥ ४ ॥ ऋतजिच्चसत्याजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरे
ऽअमित्रश्चगणः ॥ ५ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणं -:- सदृक्षासः प्रतिसदृक्षासऽएतन ॥

मितासंश्चसाग्मितासोनोऽअद्यसंभरसोमरुतोयज्ञेऽअस्मिन् ॥ ६ ॥ स्वतवांश्चप्रघासीचसान्त पनश्चगृहमेधीचं ॥ क्रीडीचंशाकीचोज्जेषि ॥ ७ ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्य थेन्द्रं दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मा नोभवन्तु ॥ ८ ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ॥ ९ ॥ घृताग्निमिक्षेघृतमस्य० ॥ १ ॥ वसोः प० क्षः स्वाहा ॥ ततोऽग्निंप्रदक्षिणीकृत्यपश्चिमदेशेप्राङ्मुखोपविश्य ॥ ततः स्रुवेणभस्म आनीय ओं त्र्यायुषंजमदग्नेः इति ललाटे । कश्यपस्यत्र्यायुषम् । इति ग्रीवायां । यद्देवेषु त्र्यायुषम् इति दक्षिणांसे ॥ तन्नोऽअस्तुत्र्यायुषमिति हृदि । संस्रवप्राशनम् । आचमनम् ।

पवित्राभ्यांमार्जनम् । अग्नौपवित्रः प्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ कृतस्य ग्रहशा
न्तिहोमकर्मणोङ्गतयाविहितं इदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यमहंसंप्रददे ॥ ओं द्यौ
स्त्वाददातु पृथिवीत्वाप्रतिगृह्णातु ॥ अग्नेपश्चात्प्रणीताविमोकः ॥ ओं आपः शिवाः शि
वतमाः शांताः शान्ततमास्तास्तेकृण्वंतु भेषजम् । उपयमनकुशैर्मार्जयेत् ॥ उपयमनकुशाना
मग्नौप्रक्षेपः ॥ ब्रह्मग्रन्थिविमोकः ॥ ततः श्रेयःसंपाद्यदानम् ॥ अद्येत्यादिकृतस्यग्रहशां
त्याख्यस्यकर्मणः यजमानायश्रेयोदानं करिष्ये ॥ तत्रादौ वचः प्रतिवचनम् । शिवाआपः
सन्तु ॥ सन्तुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यम् ॥ अक्षतंचारिष्टं चास्तु ॥
अस्त्वक्षतमरिष्टं च ॥ यजमानहस्तेगन्धादिदानम् ॥ गन्धाः पांतु ॥ सुमंगल्यंचास्तु ॥
अक्षताः पान्तु ॥ आयुष्यमस्तु ॥ पुष्पाणिपान्तु ॥ सौश्रियमस्तु ॥ यत्पापंरोगं अशुभंअ
कल्याणं तद्दूरेप्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु । भवन्नियोगेन मयाअस्मिन् ग्रहशान्त्याख्येक

र्मणि यत्कृतं आचार्यत्वं तदुत्पन्नं श्रेयः तत् अमुना साक्षतेनसजलेनपूगीफलेनतुभ्यमहं सं प्रददे ॥ प्रतिगृह्यताम् ॥ देवस्यत्वेति प्रतिगृह्णामि ॥ तेनश्रेयसात्वंश्रेयोवान्भव ॥ यजमानः भवामीतितेनवाच्यम् ॥ एवमेवब्रह्मादयोऋत्विजोजापकादयश्च ॥ यद्वा ॥ ब्रह्मादयोऋत्विजोजापकाश्च आचार्यद्वाराश्रेयोदानं कुर्युः ॥ तद्यथा ॥ भवन्नियोगेनमयाअस्मिन् ग्रहशांत्याख्येकर्मणियत्कृतं आचार्यत्वं तथा एभिर्ब्राह्मणैः सहयत्कृतंब्रह्मत्वं गाणपत्यत्वंसादस्यत्वंतथाच यः कृतोजपः आचार्यत्वात् ब्रह्मत्वात् गाणपत्यत्वात् सादस्यत्वात् जापकत्वात् यदुत्पन्नंश्रेयः तत् अमुनासाक्षतेनसजलेनपूगीफलेनतुभ्यमहंसंप्रददे ॥ तेन श्रेयसात्वं श्रेयोवान्भव ॥ भवामीतितेनवाच्यम् ॥ ततोआचार्यादीन् गन्धवस्त्रालंकारादिभिर्यथाविभवंपूजयेत् ॥ आचार्यादिभ्योब्राह्मणेभ्योदक्षिणांदद्यात् ॥ तत्रक्रमः ॥ आचार्यायगाम् ॥ १ ॥ ब्रह्मणेवृषभम् ॥ २ ॥ सदस्यायअश्वम् ॥ ३ ॥ ऋत्विग्भ्योसुवर्णंदद्यात् ॥ ४ ॥ कृतस्यग्रह

शान्तिकर्मणः सांगतासिद्ध्यर्थं तत्संपूर्णफलप्राप्त्यर्थं इदंगोनिष्क्रयभूतं द्रव्यं अमुकगोत्राय अमुकशर्मणेब्राह्मणाय आचार्यायतुभ्य महंसंप्रददे । ओं स्वस्तीतिपठेत् ॥ १ ॥ कृ० इदं वृषनिष्क्रयभूतं द्रव्यंय० ॥ २ ॥ कृ० इदंसदस्यायअश्वनिष्क्रयभू० ॥ ३ ॥ कृ० इदं ऋत्विग्भ्यः सुवर्णनिष्क्रयभू० ॥ ४ ॥ ततोब्राह्मणभोजनसंकल्पंकुर्यात् ॥ कृतस्य० ग्रहशां० कर्म० यथासंख्याकान्ब्राह्मणान् यथाकालेयथोत्पन्नेनान्नेनाहं भोजयिष्ये ॥ भोजनांते तेभ्यः ताम्बूलदक्षिणांचदास्ये ॥ ततो ग्रहपीठदेवतानां गन्धादिपंचोपचारैरुत्तरपूजनम् ॥ आवाहितदेवताभ्योनमः ॥ आचार्यायप्रधानपीठंदद्यात् ॥ कृ० थं इदं ग्रहपीठंमातृकापीठंसोपस्करंदक्षिणासहितं आचार्यायतु० । ततोरुद्रकलशदेवतान्तरकलशोदकमेकस्मिन्पात्रेकृत्वादूर्वापंचपल्लवैरुदङ्मुखआचार्यस्तिष्ठन् चत्वारोऋत्विजश्चसकुटुम्बं स्वोत्तरतः सपत्नीकंयजमानं प्राङ्मुखमुपविष्टमभिषिंचेयुः ॥ ततमन्त्राः । देवस्यत्वा॥ ० संरस्वत्यैव्वाचोयन्तुर्यंत्रियेदधामिबृहु

स्पतेष्ट्वासाम्राज्येनाभिषिंचाम्यसौ ॥ १ ॥ देवस्यत्वा० ॥ सरस्वत्यैवाचोयंतुर्यंत्रेणाग्ने : सा
म्राज्येनाभिषिंचामि ॥ २ ॥ देवस्यत्वा० ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामि
सरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिंचामीन्द्रस्येंद्रियेणबलायश्रियैयशसेभिषिंचामि । ३ ।
ओं सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्चभवन्तुविजयायते । आखण्डलोग्निर्भगवान् यमोवैनिर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताः सर्वेदिक्पालाः पांतुतेसदा ॥ ३ ९
कीर्तिर्लक्ष्मिर्धृतिर्मेधापुष्टिः श्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः शान्तिः कान्तिः स्तुष्टिश्च
मातरः ॥ ४ ॥ एतास्त्वामभिषिंचन्तुदेवपन्त्यः समागताः ॥ आदित्यश्चन्द्रमाभौमोबुध
जीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचन्तु राहुः केतुश्चतर्पिताः ॥ देवदानवगन्धर्वा

यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमनवोगावोदेवमातरएवच । देवपत्न्योद्रुमानागादैत्याश्चाप्सरसाङ्गणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच । औषधानिचरत्नानिकालस्यावयवाश्चये ॥८॥ सरितः सागराः शैलास्तीर्थानिजलदानदाः । एतेत्वामभिषिंचन्तु धर्मकामार्थसिद्धये ॥ ९ ॥ अमृताभिषेकोस्तु ॥ शान्तिः पुष्टिस्तुतिश्चास्तु । अन्येभ्योब्राह्मणेभ्योयथाशक्तिभूयसींदक्षिणांदद्यात् ॥ कृ० थं तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं नानागोत्रेभ्योनानाशर्मभ्यो ब्राह्मणेभ्यः समाश्रितबंधुवर्गेभ्योदीनानाथेभ्यश्च यथोत्साहांभूयसींदक्षिणांविभज्यदातुमहमुत्सृजे ॥ ततोदेवताग्निं सानुनयांविसृज्य । ओं उत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे । उपप्रयंतुमरुतः सुदानवइन्द्रप्राशूर्भवासचां । यान्तुदेवगणाः सर्वेपूजामादायमामकीम् । इष्टकामार्थसिध्यर्थं पुनरागमनायच । आवाहितदेवताः स्वस्थानेगच्छत । १ । ओं यज्ञं

यज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांयोनिंगच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकः सर्ववीरस्त ञ्जुषस्वस्वाहा । गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर । यत्रब्रह्मादयोदेवास्तत्रगच्छहुताश न ॥ यज्ञनारायणस्वस्थानेगच्छ ॥ २ ॥ ओं चतुर्भिश्चचतुर्भिश्चद्वाभ्यां पञ्चभिरेवच ॥ हूयते चपुनर्द्वाभ्यां तस्मैयज्ञात्मनेनमः ॥ मयायत्कृतं यथाकालं यथादेशंयथाज्ञानं यथाशक्तिग्रहय ज्ञाख्यंकर्मतेनश्रीपापापहामहाविष्णुः प्रीयताम् ॥ ओं तत्सतब्रह्मार्पणमस्तु ॥ सकुशजलंभूमौक्षि पेत् ॥ करौसंपुटीकृत्य ॥ मयायत्कृतंग्रहयज्ञाख्यंकर्मतत्कालहीनं भक्तिहीनं श्रद्धाहीनं भवतांब्रा ह्मणानांवचनात् श्रीसूर्याद्यावाहितदेवताप्रसादात्सर्वं विधेः परिपूर्णमस्त्वितिभवन्तोब्रुवन्तु ॥ अ स्तुपरिपूर्णऽइतिब्राह्मणाः वदेयुः ॥ जपच्छिद्रंतपच्छिद्रंयच्छिद्रंशान्तिकर्मणि ॥ सर्वं भवतुमेऽच्छि द्रंब्राह्मणानांप्रसादतः ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्या

र्दितिश्रुतिः ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतांयातिसद्योवंदेतमच्युतम् ॥ ओं विष्णवेनमः ॥ ३ ॥ ततो तिलकाशीर्वादः ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥ धान्यं धनं पशुंबहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ मन्त्रार्थाः सफलाः संतु पूर्णाः संतुमनोरथाः ॥ शत्रूणां बुद्धिनाशोस्तुमित्राणामुदयस्तव ॥ ब्राह्मणान् भोजयित्वादीनानाथांश्चान्नादिना सन्तोष्यस्वयंसुहृन्मित्रादियुतः सोत्साहः सन्तुष्टोहविष्यं भुंजीतेतिशिवम् ॥

इति श्रीपण्डितोपाह्वराधाकृष्णशर्मात्मजशम्भूनाथसंगृहीतो ग्रहयज्ञप्रयोगस्समाप्तः ।

---

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णुना स्वकीये
" लक्ष्मीवेङ्कटेश्वर " स्टीम्-मुद्रणयंत्रालये मुद्रयित्वा प्रकाशितम् ।
संवत् १९८२, शके १८४७.

श्रीगणेशाय नमः ॥ अथ सर्वतोभद्रकारिका स्कान्दे ॥ प्रागुदीच्यांगता रेखाः कुर्यादेकोनविंशतिः ॥ खण्डेन्दुस्त्रिपदः कोणे श्रृंखलापञ्चभिः पदैः ॥१॥ एकादशपदावल्लीभद्रन्तुनवभिः पदैः । चतुर्विंशत्पदावापीपरिधिर्विंशति : पदैः ॥ २ ॥ मध्येषोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् । श्वेतेन्दुः श्रृंखलाकृष्णावल्लीनीलेनपूरयेत् ॥ ३ ॥ भद्रारुणासितावापीपरिधिः पीतवर्णकः । वाह्यान्तरदलः श्वेताकर्णिकापीतवर्णिका ॥ ४ ॥ पीरध्यावेष्टितंपद्मंबाह्यंसत्वंरजस्तमः । तन्मध्येस्थापयेद्देवान् ब्रह्माद्यांश्चसुरेश्वरान् ॥ ५ ॥ इति सर्वतोभद्रकारिका । अथ लिङ्गतोभद्रकारिकास्कान्दे । रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिङ्गसमुद्भवे । कोणेन्दुस्त्रिपदः श्वेतस्त्रिपदैः कृष्णशृंखलाः॥१॥ वल्लीसप्तपदानीलाभ रक्तंद्रंरचतुष्पदम् । भद्रं पार्श्वेमहारुद्रंकृष्णमष्टादशैः पदैः ॥ २ ॥ शिवस्यपार्श्वतोवापीकुर्यात्पञ्चपदासिताम् । पदमेकंतथापीतंभद्रवाप्योस्तुमध्यतः ॥ ३ ॥ शिरसिश्रृंखलायाश्चकुर्यात्पीतंपदत्रयम् । लिङ्गानां स्कन्धतः कोष्ठाविंशतीरक्तवर्णकाः ॥ ४ ॥ परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृतः । पदैस्तुनवभिः पश्चाद्रक्तंपद्मंसकर्णिकम् ॥ ५ ॥ इति लिङ्गतोभद्रकारिका । पञ्चवर्णान्युक्तानिपञ्चरात्रे । रजांसिपञ्चवर्णानिमण्डलार्थं हि कारयेत् । शालितण्डुलचूर्णेनशुक्लंवायवसम्भवम् ॥ १ ॥ रक्तं कुसुम्भसिन्दूरंगैरिकादिसमुद्भवम् । हरितालोद्भवंपीतंरजनीसम्भवंक्वचित्॥२॥ कृष्णंदग्धैर्यवैः कार्यं हरितंविल्वचूर्णकम् । कारयेत्सर्वधान्यैर्वावर्णकैरुपशोभितम् ॥ ३ ॥ अथभद्रेदेवतास्थापनक्रमः । साचार्योयजमानः सर्वतोभद्रमण्डलसमीपे

उपविश्य आचम्य ३ प्राणानायम्य । मध्येकर्णिकायां ॐ ब्रह्मणेनमः ब्रह्माणं आवाहयामि स्थापयामि ॥१॥ एवमग्रेपि उत्तरेवाप्यां ॐ सोमाय० सोमं० ॥ २ ॥ ईशान्यांखण्डेन्दौ ॐ ईशानाय० ईशानं० ॥ ३ ॥ पूर्ववाप्यां ॐ इन्द्राय० इन्द्रं०॥४॥ आग्नेयांखण्डेन्दौ ॐ अग्नये० अग्निं० ॥ ५ ॥ दक्षिणेवाप्यां ॐ यमाय० यम० ॥६॥ नैर्ऋत्यां खण्डेन्दौ ॐ नैर्ऋतये० नैर्ऋतिं॥७॥ पश्चिमेवाप्यां ॐ वरुणाय० वरुणं०॥८॥वायव्यांखण्डेन्दौ ॐ वायवे०वायुं० वायुसोममध्येभद्रेलिङ्गेवा ॐ अष्टवसुभ्यो० अष्टव० ॥ १० ॥ सोमेशानमध्येभद्रेलिंगे ॐ एकादशरुद्रेभ्यो० एकादशरु० ॥ ११ ॥ ईशानेन्द्रमध्ये ॐ द्वादशादित्येभ्यो० द्वादशादि० ॥ १२ ॥ इन्द्राग्न्योर्मध्येभद्रेलिंगे ॐ अश्विभ्यां० अश्विनौ० ॥१३ ॥ अग्नियममध्येभद्रेलिंगे ॐ सपैतृकेभ्योश्वेभ्योदेवे० सपैतृकान्विश्वान्दे० ॥ १४ ॥ यमनिर्ऋतिमध्येभद्रेलिंगे ॐ सप्तयक्षेभ्यो सप्त०॥१५॥निर्ऋतिवरुणमध्येभद्रेलिंगे ॐ भूतनागेभ्यो० भूतनागा० ॥१६॥ वरुणवायुमध्येभद्रेलिंग ॐ गन्धर्वाप्सरोभ्यो० गन्धर्वाप्सरसः ॥ १७ ॥ ब्रह्मसोममध्ये लिंगेवाप्यां ॐ स्कन्दाय०स्कन्दं० ॥१८॥ तदुत्तरे ॐ वृषभाय० वृषभं० ॥ १९ ॥ तदुत्तरे ॐ शूलाय० शूलं० ॥ २० ॥ तत्रैव ॐ महाकालाय० ॥ २१ ॥ ब्रह्मेशानमध्येशृंखलायां ॐ दक्षादिसप्तगणेभ्यो० दक्षादिसप्तगणान् ॥ २२ ॥ ब्रह्मेन्द्रमध्यवाप्यां ॐ दुर्गायै० दुर्गां ॥ २३॥ तत्पूर्वे ॐ विष्णवे०विष्णुं० ॥२४॥ ब्रह्माग्निमध्येश्रृंखलायां ओं स्वधायै० स्वधां० ॥२५॥ ब्रह्मयममध्येवाप्यां ओं मृत्युरो

गर्भेयो० मृत्युरोगा० ॥ २६ ॥ ब्रह्मनिर्ऋतिमध्ये शृंखलायां ओं गणपतये० गणप० ॥२७॥ ब्रह्मवरुणमध्येत्राप्यां ओं अद्भ्यो० अपः आ० ॥ २८ ॥ ब्रह्मवायुमध्येश्रृंखलायां ओं मरुद्भ्यो० मरुतःआ० ॥२९॥ ब्रह्मणः पादमूले कर्णिकाधः मध्यएव ओं पृथिव्यै० पृथिवीं० ॥ ३० ॥ तत्रैव ओं गंगादिनदीभ्यो० गंगादिनदीःआ० ॥ ३१ ॥ तत्रैव ओं सप्तसागरेभ्यो० सप्तसागरा० ॥ ३२ ॥ तदुपरिकर्णिकापरिधौ ओं मेरवे० मेरु० वाह्यपरिधौसोमसमीपे ओं गदायै० गदां० ॥३४॥ ईशानांतिके ओं त्रिशूलाय०त्रिशूलम् ॥३५ ॥ इन्द्रान्तिके ओं वज्राय० वज्रं०॥३६॥ अग्निसमीपे ओं शक्तये शक्तिं० ॥ ३७ ॥ यमान्तिके ओं दण्डाय० दण्डं० ॥ ३८ ॥ निर्ऋतिसमीपे ओं खड्गाय० खड्गम्० ॥ ३९ ॥ वरुणांतिके ओं पाशाय० पाशं० ॥ ४० ॥ वायुसमीपे ओं अङ्कुशाय० अङ्कुशम् ॥ ४१॥ तद्बाह्येउत्तरे ओं गौतमाय० गौतमम् ॥ ४२ ॥ ईशान्ये ओं भरद्वाजाय० भरद्वाजम् ॥ ४३ ॥ पूर्वे ओं विश्वामित्राय विश्वामित्रम् ॥ ४४ ॥ आग्नेयां ओं कश्यपाय० कश्यपं० ॥ दक्षिणे ओं जमदग्नये जमदग्निं ॥ ४६ ॥ नैर्ऋत्यां ओं वसिष्ठाय० वसिष्ठं० ॥ ४७ ॥ पश्चिमे अत्रयं० अत्रिं० ॥ ४८ ॥ वायव्यां ओं अरुन्धत्यै अरुन्धतीं ॥ ४९ ॥ तद्बाह्ये पूर्वादिक्रमेण ओं ऐंद्र्यै० ऐन्द्रीं ॥ ५० ॥ ओं कौमार्यै० कौमारीं० ॥ ५१ ॥ ओं ब्राह्म्यै० ब्राह्मीं ॥ ५२ ॥ ओं वाराह्यै० वाराहीम् ॥५३ ॥ ओं चामुण्डायै० चामुण्डां० ॥५४॥ ओं वैष्णव्यै वैष्णवीं ॥ ५५ ॥ ओं माहेश्वर्यै० माहेश्वरीम्० ॥५६ ॥ ओं वै-

नायक्यै० वैनायकीं० ॥ ५७ ॥ इतिरुद्रकल्पद्रुमाद्यनुसारोसर्वतोभद्रदेवताः ॥ अ० लिं० भ० देवताविशेषः । तद्बाह्ये पूर्वेअसितांगभैरवा० असितांगभैरव॥१॥ आग्नेयांरुरुभैरवाय०रुरुभैरवम्॥२॥दक्षिणे ओं चण्डभैवाय चण्डभैरवम् ॥३॥ नैर्ऋत्यां ओं क्रोधभैरवाय क्रोधभैरववम् ॥४॥ पश्चिमे ओं उन्मत्तभैरवाय०उन्मत्तभैरवम् ॥५॥ वायव्यां ओं कपालभैरवाय कपालभैरवम् ॥ ६ ॥ उत्तरे ओं भीषणभैरवाय० भीषणभैरवम् ॥ ७ ॥ ईशान्यां ओं संहारभैरवाय संहारभैरवम् ॥ तद्बाह्येपूर्वादिक्रमेण ओं भवाय० भवम्॥९॥ ओं शर्वाय०शर्वम्॥१०॥ॐ पशुपतये० पशुपतिं ॥११॥ॐ०ईशानाय०ईशा-नम् ॥ १२ ॥ ॐ रुद्राय० रुद्रम्० ॥ १३ ॥ ॐ उग्राय० उग्रम् ॥ १४ ॥ ॐ भीमाय० भीमं ॥ १५ ॥ ॐ महते० महांतम् ॥१६॥ ॐ अनंताय० अनंतम् ॥१७॥ ॐ वासुकये० वासुकिं ॥१८॥ ॐ तक्षकाय० तक्षकम् ॥१९॥ ॐ कुलि-शाय० कुलिशम् ॥ २० ॥ ॐ कर्कोटकाय० कर्कोटकम् ॥ २१ ॥ ॐ शंखपालाय० शंखपालम् ॥ २२ ॥ ॐ केव-लाय० केवलम् ॥ २३ ॥ ॐ अश्वतराय० अश्वतरम् ॥ २४ ॥ ईशानेन्द्रयोर्मध्ये ॐ शूलाय० शूलम् ॥२५॥ इन्द्रा-ग्न्योर्मध्ये० ॐ चन्द्रमौलिने० चन्द्रमौलिनं० ॥ २६॥ अग्नियमयोर्मध्ये चन्द्रमसे० चन्द्रमसम् ॥ २७ ॥ यमनिर्ऋतिमध्ये ॐ वृषभध्वजाय० वृषभध्वजम् ॥ २८ ॥ निर्ऋतिवरुणयोर्मध्ये त्रिलोचनाय० त्रिलोचनम् ॥ २९ ॥ वरुणवायुमध्येॐ शक्तिधराय० शक्तिधरम्० ॥ ३० ॥ वायुसोमयोर्मध्ये ॐ महेश्वराय० महेश्वरम्० ॥ ३१ ॥ सोमेशानयोर्मध्ये ॐ शूल-

पाणये० शूलपाणिं० ॥ ३२ ॥ इतिलिं० भ० दे० ॥ अथप्रतिमासुअग्न्युत्तारणविधिः ॥ आचार्यः पात्रान्तरेप्रतिमांनि-धायघृतेनाभ्यज्य ॥ उपरिजलधारांकुर्यात् ॥ तत्रमन्त्राः ॐ समुद्रस्यत्वा ॥ १ ॥ हिमस्यत्वा ॥ २ ॥ उपज्मन्नु० ॥३॥ अपामिदन्य० ॥ ४ ॥ अग्नेपावकरो० ॥ ५ ॥ सनः पावकदी० ॥ ६ ॥ पावकयाय० ॥ ७ ॥ नमस्तेहरसे० ॥८ ॥ नृषदे० ॥ ९ ॥ येदेवादेवानां० ॥ १० ॥ येदेवेष्वाधि० ॥ ११ ॥ प्राणदा० ॥ १२ ॥ अथप्राणप्रतिष्ठांकृत्वा प्रति-मांहस्तेन संस्पृश्यबीजमन्त्रान्जपेत् ॥ ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सः अस्यप्राण इहप्राणाः ॥ पुनः आँ ह्रीं० सः० अस्य जीवइहस्थितः ॥ एवमग्रेपि सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणप्राणाः इहागत्यस्वस्तयेसुखंचिरं तिष्ठन्तुस्वाहा ॥ अस्यैप्राणाः प्रतिष्ठंतुअस्यैप्राणाः क्षरंतु च ॥ अस्यैदेवत्वमर्चायैमामहेतिकश्चन ॥ इतिप्राणप्रतिष्ठांकृत्वा प्रतिमांपूजयेत् ॥ इत्यग्न्युत्तारणविधिः समाप्तः ॥



## ॥ सप्तघृत मातृकाचक्रम् ॥

॥ श्रीः ॥



कीर्तिर्लक्ष्मी धृतिर्मेधास्वाहाप्रज्ञासरस्वती ॥
मांगल्येषुप्रपूज्यंते सप्तैताघृतमातरः ॥१ ॥

॥ इतिवसोर्धारा ॥

## ॥ षोडशमातृकाचक्रम् ॥

पूर्व

| | | | |
|---|---|---|---|
| आत्मनः कुलदेवता १७ | लोकमातरः १३ | देवसेना ९ | मेधा ५ |
| तुष्टिः १६ | मातरः १२ | जया ८ | शची ४ |
| पुष्टिः १५ | स्वाहा ११ | विजया ७ | पद्मा ३ |
| ऋष्टिः १४ | स्वधा १० | सावित्री ६ | गणेश १ गौरी २ |


पश्चिम
कृष्ण
राहु
कृष्ण
शनि
कृष्ण
केतु
दक्षिण
रक्त
भौम
रक्त
सूर्य
पीत
गुरु
उत्तर
श्वेत
चन्द्र
श्वेत
शुक्र
हरित
बुध
पूर्व

ग्रहचक्रमिदम्

## ॥ श्रीग्रन्थकर्तापरिचयः ।

जयति जगति जम्बूराजधानीहिमानी--विशदविततकीर्तिर्भाति यस्याः सुधांशौ ॥
दिवइवहृतमेकं खण्डमाशङ्कयते या विलसति जसरोटा तत्र पूरिन्द्रपूर्वा ॥ १ ॥
तस्यां युगलकिशोरेराशिः पुण्यस्य मूर्तइवजातः । तस्य तनूजो राधाकृष्णःसारस्वताग्रगण्योऽभूत् ॥ २ ॥
तस्याभूत्तनयोनयार्जितकलः शास्त्रस्य पारङ्गतो विद्वान्वेदविदांवरेण्य इह यः ख्यातः सतां संसदि ।
वागीशानपिमूकतांप्रणयतीहायस्यदृष्टिङ्गता शम्भूनाथसकाशिकासुविजयेनास्तेविदांमण्डले ॥ ३ ॥
तेने तेनेदञ्चेत्वक्कचिदपि दोषेण संस्थिताशुद्धिः । भवतां भवतांतोषे तदपि न दोषेषु मन्तव्यम् ॥ ४ ॥

निवेदक-रामचन्द्र त्रिपाठी.

---

गंगाविष्णु श्रीकृष्णदास, " लक्ष्मीवेंकटेश्वर " मुद्रणयन्त्रालयाध्यक्ष, कल्याण-मुंबई.

